# राष्ट्र-गीताञ्जलिः

•

कपिलदेव द्विवेदी

•

विश्वभारती अनुसंधान परिषद्
ज्ञानपुर ( वाराणसी )

RASHTRA-GITANJALI

by

Dr. K.D. DVIVEDI

First Edition, 1978





मूल्य

अजिल्द : १०.००

सजिल्द : १५.००

उत्तरप्रदेश-संस्कृत-अकादमी-प्रदत्त-

आर्थिक-साहाय्येन प्रकाशित




प्रकाशक

विश्वभारती अनुसंधान परिषद्

शान्ति-निकेतन, ज्ञानपुर ( वाराणसी )

वितरक

विश्वविद्यालय प्रकाशन, चौक, वाराणसी

मुद्रक

शीला प्रिण्टर्स, लहरतारा, वाराणसी

## समर्पणम्

सच्चारित्र्य-गुणोच्छ्रयार्जित-यशःस्तोमैः सदा भास्वरैः,
स्वातन्त्र्यार्थ-समर्पितात्म-विभवैः क्रान्त्येकनिष्ठैः प्रियैः ।
वीरैर्यैस्तु हुतात्मभिर्भरतभू-कीर्तिर्भवे ख्यापिता,
तेभ्यः साधु समर्प्यते कृतिरियं 'देवेन' श्रद्धाजुषा ॥

कपिलदेव द्विवेदी

माता भूमिः पुत्रो अहं पृथिव्याः ।

अथर्व० १२-१-१२

वयं तुभ्यं बलिहृतः स्याम ।

अथर्व० १२-१-६२

वयं राष्ट्रे जागृयाम पुरोहिताः ।

यजु० ९-२३

अहं राष्ट्री संगमनी वसूनाम् ।

ऋग्० १०-१२५-३

विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त ।

यजु० १०-४

# आत्म-निवेदनम्

संस्कृतभाषायाम् अनेके प्रौढा ज्ञानविज्ञान-ग्रन्थाः समुपलभ्यन्ते, परन्तु राष्ट्रीय-भावना-प्रधानानां काव्यादिग्रन्थानाम् अभावो नितरां मे मानसम् अदूयत। तदभाव-पूर्त्यै एव मामकोऽयं तुच्छः प्रयासः। भारतीय-स्वातन्त्र्योत्तरं भारतीयानां परममेतत् कर्तव्यं यत् कथं भारतस्य स्वातन्त्र्यरक्षा स्यात्; भारतीयेषु राष्ट्रीय-भावना व्याप्नुयाद् जागृयाच्च; भारतीय-युवजनेषु क्रान्तिभावना प्रसर्पेत्; कथं च जना देशहिताय बलिदान-तत्परा भवेयुः, इत्यादि-भावनाः समालम्ब्य काव्यस्यैतस्य प्रणयने प्रवृत्तः। यैर्हुतात्मभिर्वीरैः भारत-स्वाधीनतायै, भारतगौरव-वृद्ध्यै, पराधीनता-पाश-निवृत्त्यै च स्वकीयानि जीवनानि तृणवत् परित्यक्तानि, तेषां गुणगाथा कस्य न चरित्रोन्नतिं विधातु प्रभवति, इति विचार्यात्र तेषां हुतात्मनां जीवनवृत्तानि ग्रथितानि। भारतीय-गौरवं मातृभूमि-गौरवं च विविध-गीतिरूपेणात्र प्रस्तूयते। राष्ट्रियं कर्तव्यम्, राष्ट्रोद्बोधनम्, स्वदेशानुरागः, सत्याग्रहः, सर्वोदयः, दलितोद्धारः, श्रमदानम्, वसुधैव कुटुम्बकम्, इत्यादयो राष्ट्रिय-भावना-प्रधाना विषया अत्र संगृहीताः। भारतीय-स्वातन्त्र्य-युद्धस्य क्रान्त्यात्मकस्य शान्त्यात्मकस्य च वर्णनं नैव उपलभ्यते संस्कृते। तदत्र ख-खण्डे विशेषतः प्रस्तूयते।

संस्कृतभाषा लोकप्रिया स्यादिति विचारम् अनुसृत्य सरल-सरस-पदावलि-समवेतैव शैली अत्र समालम्बिता। गीतिषु विशेषतो मधुर-पदावली-संयोजनं विहितम्। पाण्डित्य-प्रदर्शनं सर्वथा परिहृत्य प्रतिपदं सरलतम-पदानामेव प्रयोगोऽत्र कृतः। संस्कृत-भाषायाः स्वारस्यं यथा न लुप्येत्, तथैव नितरां प्रयतितम्। काव्य-रसास्वादेन सममेव राष्ट्रीय-भावना जन-मानसेषु प्रसरेदिति तादृशी एव शैली समालम्बिता।

भाषा-विषये पर्याप्तम् औदार्यमिह उपलप्स्यते। भाषा-दुरूहता-निवारणाय प्रचलित-शब्दानां तादृग्रूपेण प्रायशः प्रयोगो विहितः। व्यक्ति-नामसु, स्थानादि-नामसु च पद्य-नियमान् अनुरुध्य आवश्यकतानुसारं मात्रादि-परिवर्तनं विहितम्। 'अपि माषं मषं कुर्यात् छन्दोभङ्गं न कारयेत्' इत्येष नियमोऽपि यथाशक्ति परिपालितः। आंग्ल-जनानां यवनादीनां च नाम-प्रयोगे छन्दोनियमान् अनुसृत्य किंचित् परिवर्तनं विहितम्, क्वचिच्च तेषां संक्षिप्तं रूपमाश्रित्यैव कार्यं निर्वाहितम्।

ग्रन्थे निबद्धानि कानिचिद् गीतानि आकाशवाण्याः दिल्ली-केन्द्रतः, लक्ष्मणपुर-केन्द्रतः, प्रयागादि-केन्द्रतश्च प्रसारम् आप्तानि। तेषां प्रकाशन-स्वीकृति-प्रदानार्थम् 'आकाश-वाणी' नितरां साधुवादार्हा।

ग्रन्थस्यास्य प्रकाशने 'संस्कृत अकादमी, उत्तरप्रदेशः' सार्धसहस्र-रूप्यक-मितम् आर्थिकं सहयोगम् अदात्, तदर्थं संस्कृत-अकादमी धन्य-वादार्हा।

हुतात्मनां जीवनवृत्तमेव मम प्रेरणा-स्रोतः, इति समेऽपि ते हुतात्मनो मम श्रद्धाञ्जलि-भाजनं सन्ति। कैश्चिद् विद्वद्भिः सहयोगिभिश्चात्र साहाय्यम् आचरितम्, तदर्थं ते धन्यवादार्हाः। पं० अमरनाथशुक्लो मम सहयोगी विविध-परामर्श-दानार्थं धन्यवादार्हः। मदीयाः सूनवो नित्यं प्रेरणादानेन सामग्री-संकलनादिकार्येषु च साहाय्यदानेन आशीर्वादम् अर्हन्ति। श्रीमती भारती, भारतेन्दुः, धर्मेन्दुः, प्रतिभा, ज्ञानेन्दुः, विश्वेन्दुः, आर्येन्दुश्च प्रतिपलं वर्धेरन्, क्रान्तिवह्निं च प्रसारयेरन् इति मे कामना।

गुणग्राहिणो विद्वांसोऽत्र प्राथ्र्यन्ते यत् ते ग्रन्थे परिवर्तनादि-परामर्शान् संप्रेष्य माम् अनुग्रहीष्यन्ति।

**'माता भूमिः पुत्रो अहं पृथिव्याः'**

शान्ति-निकेतन, ज्ञानपुर (वाराणसी)
विजय-दशमी, २०३५ वि०
दिनांक ११-१०-७८ ई०

**कपिलदेव द्विवेदी**

# अनुक्रमः

## ( खण्ड–१ )

## १. भारत-राष्ट्र-वन्दनम्

( गीतिका )

( १ )

नमामि राष्ट्र-भारतं
गुणाकरं प्रभा-रतम् ।
विभाकरं सुधाकरं
समस्त-लोक-भास्करम् ।। नमामि० ।।

( २ )

गिरीन्द्र-वृन्द-वन्दितं
सदा सुधाऽऽपगावृतम् ।
प्रफुल्ल-शाखि-शोभितं
खगारवैर्निनादितम् ।। नमामि० ।।

( ३ )

प्ररूढ-शस्य-श्यामलं
तपः-प्रभा-समुज्ज्वलम् ।
श्रुतेर्निनाद-निर्मलं
श्रये सदा-समुज्ज्वलम् ।। नमामि० ।।

( ४ )

जय-ध्वज-प्रशोभितं
त्रिवर्ण-केतु-राजितम्
अमित्र-मान-मर्दनं
सुहृत्स-दर्प-भञ्जनम् ।। नमामि० ।।

( ५ )

स्वज्ञान-दीप्ति-भास्वरं
गुण-प्रभा-विकस्वरम् ।
स्व-पौरुषाप्त-रोचिषं
स्वयोजनाप्त-ज्योतिषम् ।। नमामि० ।।

( ६ )

प्रबुद्ध-शुद्ध-मानसं
तपोविधूत-कल्मषम् ।
सदाऽऽर्यवृन्द-वन्दितं
सुधी-प्रवीर-चर्चितम् ॥ नमामि० ॥

( ७ )

हुतात्म-दीप्ति-भास्वरं
प्रवीर-शौर्य-द्योतितम् ।
सुधा-दया-गुणाकरं
श्रये सुखौघ-शान्ति-दम् ॥ नमामि० ॥

( ८ )

समस्त-विश्व-वन्दितं
गुणोच्चयार्जनोच्छ्रितम् ।
अहिंसया सुखावहं
समस्त-विश्व-दोष-हृम् ॥ नमामि० ॥

( ९ )

गुणाञ्चितं प्रभाञ्चितं
समस्त-गौरवाञ्चितम् ।
दरिद्र-दीन-तारकं
सदाऽऽर्य-वर्त्म-धारकम् ॥ नमामि० ॥

( १० )

त्वदङ्घ्रि-पद्म-सेवनं
समस्त-दोष-नाशनम् ।
अशेष-शोक-शोषणं
सुखौघ-सिन्धु-पोषणम् ॥ नमामि० ॥

●

## २. वन्दे भारत-मातरम्

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

वन्दे भारत-मातरमेतां
सुषमा-गौरव-गुम्फित-वेषाम् ।
हिमगिरि-शुभ्र-किरीट-सुशोभां
विन्ध्य-राजि-कटि-रत्न-सुमध्याम् ॥ वन्दे० ॥

( २ )

शस्य-श्यामलां गुण-गण-हृद्यां
कुसुम-समृद्धि-फलैरभिनन्द्याम् ।
क्रान्तिकारि-बलिदान-मनोज्ञां
शान्तिदूत-जन-त्याग-बलाढ्याम् ॥ वन्दे० ॥

( ३ )

शौर्य-धैर्य-बल-संचित-शक्ति
त्याग-तपोबल-संश्रित-शान्तिम् ।
करुणा-मुदिताऽमृतमय-चित्तां
दीन-हीन-जनतार्ऽपित-वित्ताम् ॥ वन्दे० ॥

( ४ )

षष्टि-कोटि-जन-घोष-करालां
शान्ति-सरोवर-रुचिर-मरालाम् ।
धान्य-समृद्धि-समेधित-शोभां
सरितां कल-रव-राजित-देहाम् ॥ वन्दे० ॥

( ५ )

तुहिनदीधितेर्दीधिति-रम्यां
तिग्मदीधितेर्दीधिति-दीप्ताम् ।
हास-लास्य-लय-गीति-गुणाढ्यां
स्नेह-दया-शुचिता-रुचिराभाम् ॥ वन्दे० ॥

( ६ )

शत्रु-मर्दिनीं खल-दल-दलनीं ।
दुःख-हारिणीं शोक-तारिणीम् ।
ताप-शाप-भय-त्रास-वारिणीं
दैन्य-दोष-मद-रोष-हारिणीम् ॥ वन्दे० ॥

( ७ )

सुखदां वरदां सुरुचि-हासिनीं
मञ्जुल-वाचं स्नेह-धारिणीम् ।
दीन-हीन-पतिताऽऽर्ति-हारिणीं
साम्य-सौख्य-मुदिता-प्रसारिणीम् ॥ वन्दे० ॥

( ८ )

रोग-शोक-भय-दुःख-प्रहर्त्रीं
क्षोभ-रोष-क्षय-क्षति-संहर्त्रीम् ।
जागृति-ममता-गुण-संधर्त्रीं
नव्य-चेतनोत्साह-प्रदात्रीम् ॥ वन्दे० ॥

( ९ )

शान्ति-सौख्य-दां भुक्ति-मुक्ति-दां
जीवन-जागृति-स्फूर्ति-शक्ति-दाम् ।
विश्व-ज्ञानदां विश्व-प्रेमदां
विश्व-शान्तिदां करुणा-पूर्णाम् ॥ वन्दे० ॥

( १० )

क्रान्ति-शान्ति-कर-युग्म-धारिणीं
पाप-तापिनीं स्वार्थ-नाशिनीम् ।
शक्ति-भक्ति-बल-वीर्य-दायिनीं
क्रान्ति-तोषिणीं शत्रु-शोषिणीम् ॥ वन्दे० ॥

## ३. राष्ट्र-गानम्

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

जन-गण-मङ्गलदायक ! जय हे !
भारतदेश ! सदा तव जय हे !
ज्ञान-ज्योतिरयममृत-सूतिः,
शक्ति-भक्ति-हृत-गौरव-भूतिः	॥ जन० ॥

( २ )

खग-रव-पूर्णः सुषमाऽऽकीर्णः,
शस्य-श्यामलो गरिमोत्कीर्णः ।
विश्वज्ञानदो विश्व-प्रेम-दो
विश्व-शान्ति-बन्धुत्व-भावदः	॥ जन० ॥

( ३ )

हिमगिरि-शोभित-मञ्जुल-मूर्तिः
विन्ध्य-शैल-शिखरार्चित-भूतिः ।
गङ्गा-यमुना-सिन्धु-नर्मदा-
ताप्ती-कृष्णा-जलरव-हृद्यः	॥ जन० ॥

( ४ )

उत्कल-बङ्ग-पञ्चनद-पुष्टः
असम-विहार-हार-संजुष्टः ।
उत्तर-मध्य-देश[1]-संपुष्टः,
गुर्जर-राजपुत्र[2]-संहृष्टः	॥ जन० ॥

( ५ )

आन्ध्रदेश-तमिलार्पित-शक्तिः
महाराष्ट्र-कृत-गौरव-पूर्तिः ।
कर्णाटक-कृत-गति-लय-रम्यः
केरल-सुषमा-प्रतिपल-हृद्यः	॥ जन० ॥

---

१. उत्तरप्रदेश-मध्यप्रदेशौ । २. गुजरात-राजपूताना-प्रदेशौ ।

( ६ )

षष्टि-कोटि-जन-मंगल-घोषः,
वेद-चारु-ध्वनि-संहृत-दोषः ।
शौर्य-धैर्य-बल-संहृत-रोषः,
मुक्ता-मणि-गण-संचित-कोषः ॥ जन० ॥

( ७ )

आर्य-पारसी-यवन-सिक्ख-जन-
ख्रिस्त-बुद्ध-जिन-मत-मन्तारः
ब्राह्मण-क्षत्रिय-वैश्य-शूद्रजन-
संहृत-भेद-भाव-संचारः ॥ जन० ॥

( ८ )

तव आह्वान-समर्पित-देहाः,
वीरास्त्यक्त-धान्य-धन-गेहाः ।
तव चरणार्पित-जीवन-स्नेहाः,
धन्यास्ते बलिदान-प्रवीणाः ॥ जन० ॥

( ९ )

स्नेहपुञ्ज हे ! शक्तिपुञ्ज हे !
ज्ञानपुञ्ज हे ! गौरव-मूर्तिः ।
क्रान्ति-दीक्षया देहि चेतनां
शान्ति-दीक्षया हर भव-तापम् ॥ जन० ॥

( १० )

ज्योतिर्मय हे भुवन-भास्कर !
त्रास-नाश-भय-दोषं संहर ।
भ्रातृभाव-समता-ममतायाः
प्रतिपलमविचल-भावं संभर ॥ जन० ॥

## ४. मातृभूमिः

( गीतिका )

( १ )

मातृभूमे ! सदा शक्ति-संचारिके !
पादपद्मे शुभे ते नतिः संततम् ।
ज्ञान-ज्योतिः-प्रसूः सौख्य-संचारिणी
दुःख-दावाग्नि-हर्त्री मनोमोहिनी ॥ मातृभूमे० ॥

( २ )

त्वं हि क्रान्तिः सदा न्याय-रक्षा-परा
शत्रु-संमर्दनी क्रूर-मानापहा ।
ज्ञान-शक्ति-प्रदा उद्यमाधायिनी
शक्ति-स्रोतः-स्वरूपा सुखाधायिनी ॥ मातृभूमे० ॥

( ३ )

पावनं ते रजः सर्व-सौख्याकरं
क्रान्तिदूतैः शिरोभिः सदा धारितम् ।
शक्तिदं शौर्यदं भक्तिदं मुक्तिदं
ज्ञानदं मानदं तापहं पापहम् ॥ मातृभूमे० ॥

( ४ )

पावनं ते पयो दुग्ध-धारोपमं
पावनं ते वनं पावनाः पर्वताः ।
पावनी ते सरिद् वृक्षमाला शुभा
पावनं ते समस्तं मतं सौख्यदम् ॥ मातृभूमे० ॥

( ५ )

पावनं ते प्रसूनं सुगन्धावहं
पावनं क्षेत्रमेतत् सुसस्यैर्वृतम् ।
पावनं ते दिनं पावनी यामिनी
पावनं कन्दमूलं फलं सौख्यदम् ॥ मातृभूमे० ॥

( ६ )

यत्र हैमो गिरिस्ते किरीटप्रभो
नाग-कश्मीर-[1]भूस्ते भुजौ संमतौ।
यत्र गङ्गा सदा रक्त-संचारिका
विन्ध्यमाला मता पृष्ठवंशोपमा ॥ मातृभूमे० ॥

( ७ )

गुर्जरान्ध्रौ[2] मतौ यत्र जङ्घोपमौ
मध्यदेशः[3] कटिः सर्वशोभावृतः।
केरलस्तामिलः[4] पादरूपौ मतौ
सागरेणार्चितं पादयुग्मं शुभम् ॥ मातृभूमे० ॥

( ८ )

विश्ववन्द्या सदा त्वं गुणैरर्चिता
ज्ञानज्योतिःप्रदाऽऽध्यात्म-संदेशिका।
सत्यनिष्ठा सदा सत्यशिक्षापरा
सत्यधर्मोदया सर्वधर्मप्रिया ॥ मातृभूमे० ॥

( ९ )

विश्वशान्तिः सदा ते मतं संमतं
विश्वबन्धुत्वशिक्षा सदा ते प्रिया।
त्वं तु विश्वं कुटुम्बं सदा मन्यसे
ज्ञानदात्री सदा पापहर्त्री मता ॥ मातृभूमे० ॥

( १० )

क्रान्ति-संचारिणी दुष्ट-संहारिणी
सौख्य-संधारिणी दुःख-संवारिणी।
शक्तिरूपा सदा भक्तिरूपा प्रिया
जीवनं मेऽर्पितं तेऽङ्घ्रियुग्मे शुभे ॥ मातृभूमे० ॥

---

१. नागालैंड-कश्मीरप्रदेशौ, २. गुजरात-आन्ध्र-प्रदेशौ, ३. मध्यप्रदेशः, ४. तमिलनाडुः।

# ५. मातृभूमि-स्तवः

( गीतिका ) ( स्रग्विणी वृत्तम् )

( १ )

मातृभूमिः सदा देवभूमिः शुभा
देववर्यैर्वृता वीरवर्यैः स्तुता।
भारती भूरियं रत्नगर्भा मता
स्वर्णभूमिर्मणीनां खनिः संमता ॥ मातृ० ॥

( २ )

मातृभूमेस्तु तुल्यं न किंचिद् भवे
मातृभूमिस्तु स्वर्गादपि श्रेयसी।
प्राणदात्री सदा चान्नदात्री स्थिता
पालिका पोषिका मातृरूपा मता ॥ मातृ० ॥

( ३ )

मातृभूमिः सदा वन्द्यते स्तूयते
पुत्ररूपा वयं स्नेहभाजो मताः।
मातृभूमेर्ऋणान्नैव मुक्तिर्भवे
प्राणदानं सदाऽपेक्षते मातृभूः ॥ मातृ० ॥

( ४ )

क्रान्तिदूतैः सदा प्राणदानैः स्तुता
शान्तिदूतैः सदा स्वार्थत्यागाद् वृता।
धर्मनिष्ठैः स्वदेहार्पणेनाऽऽदृता
देशभक्तैश्च शूलिः प्रियेवाऽऽदृता ॥ मातृ० ॥

( ५ )

स्वर्गरूपा सदा स्नेहरूपा प्रिया
हैम-विन्ध्याद्रिमाला-गुणालंकृता।
शस्य-श्यामा सरिद्भिः सुरक्ताञ्चिता
पद्मजा[1] शैलजा[2] नीरजेवा[3]ऽऽदृता ॥ मातृ० ॥

---

१. लक्ष्मीः, २. पार्वती, ३. कमलिनी।

( ६ )

अन्नदानैः सदा तोयदानैः स्तुता
कन्द-मूलैः सुपुष्पैः फलैर्मण्डिता ।
पूतपांसुः श्रिता तीर्थराजैः शुभैः
मातृशक्तिः सदा प्रेरणादायिनी ॥ मातृ० ॥

( ७ )

शक्तिदात्री सदा स्नेहस्रोतः प्रिया
सौख्यधात्री सदा शान्तिरूपा मता ।
तेऽङ्घ्रियुग्मं सदा पाप-सन्तापहं
दोषहं रोषहं क्लेशहं द्वेषहम् ॥ मातृ० ॥

( ८ )

विश्वशान्तेः सदा शिक्षिका शान्तिदा
शान्तिधामाऽऽश्रया श्रेयसे ज्ञानदा ।
विश्वबन्धुत्व-शिक्षाप्रदा भैरवा
शत्रु-संहारिणी दैत्य-विध्वंसिनी ॥ मातृ० ॥

( ९ )

भारतीयाः समे ते सुता लालिताः
पालिताः पोषिताः स्नेह-संवर्धिताः ।
भ्रातृरूपा न तेषां विरोधः शुभः
स्नेह-भावोदयः प्रोन्नतेः कारकः ॥ मातृ० ॥

( १० )

धर्मभेदो न वा जातिभेदः शुभो
वर्गभेदो न वा वर्णभेदः शुभः ।
मातृभूमेः समुत्कर्षहेतोर्मुदा
प्राणदानं वरं वित्तदानं शुभम् ॥ मातृ० ॥

## ६. भारतं तं नुमो भारतं तं नुमः

( गीतिका ) ( स्रग्विणी-वृत्तम् )

( १ )

यत्र वेदध्वनिः पापसंहारिणी
यत्र शास्त्रादि-चर्चा मनोमोहिनी।
यत्र वेदान्त-विद्या सुधाधायिनी
भारतं तं नुमो भारतं तं नुमः ॥

( २ )

यत्र सत्यं शिवं सुन्दरं राजते
यत्र धर्मार्चना वीरपूजा सदा।
यत्र विश्वं कुटुम्बं मतं श्रेयसे
भारतं तं नुमो भारतं तं नुमः ॥

( ३ )

यत्र गङ्गा नदी, यत्र कालिन्दिका
यत्र गोदा च कृष्णा च कावेरिका।
यत्र सिन्धुर्विपाशा शुभा नर्मदा
भारतं तं नुमो भारतं तं नुमः ॥

( ४ )

यत्र रामश्च कृष्णश्च विश्वात्मनौ
यत्र बुद्धो वसिष्ठश्च वल्मीकजः।
गोतमो जैमिनिः श्रीकणादो मुनिः
भारतं तं नुमो भारतं तं नुमः ॥

( ५ )

यत्र रामायणं च महाभारतं
दर्शनानां चयो यत्र ज्ञानामृतम्।
यत्र स्मृत्यादिकं धर्मशास्त्रोच्चयो
भारतं तं नुमो भारतं तं नुमः ॥

( ६ )

यत्र सीता सती रामप्राणप्रिया
यत्र कृष्णप्रिया राधिका राजते।
यत्र गार्गी च विद्योत्तमा राजतो
भारतं तं नुमो भारतं तं नुमः ॥

( ७ )

यत्र व्यासो मुनिः पाणिनिः पिङ्गलः
कालिदासः कविर्भारविर्भास्वरः।
माघ-हर्षादयः काव्यकारोत्तमाः
भारतं तं नुमो भारतं तं नुमः ॥

( ८ )

यत्र कादम्बरी विज्ञ-चेतोहरी
मेघदूतं मनोदूत-कान्तं मतम्।
गीतगोविन्दकं कृष्णलीलामृतं
भारतं तं नुमो भारतं तं नुमः ॥

( ९ )

यत्र हैमो हिमाच्छादितः पर्वतो
यत्र कश्मीर-भूःस्वर्ग-शोभा-स्थली।
विन्ध्यमालाऽर्वली-सत्पुडा-संहतिः
भारतं तं नुमो भारतं तं नुमः ॥

( १० )

यत्र काशी पुरी ज्ञान-विद्या-प्रदा
यत्र काञ्ची पुरी ज्ञान-गीताश्रया।
यत्र वृन्दावनं कृष्णलीलाश्रयं
भारतं तं नुमो भारतं तं नुमः ॥

( ११ )

यत्र तीर्थाधिपः संगमो राजते
नेहरू-मालवीयौ नृणामादृतौ ।
उत्तरः स प्रदेशो जनैर्गीयते
भारतं तं नुमो भारतं तं नुमः ॥

( १२ )

यत्र बौद्धा विहारा अशोको नृपो
ज्ञान-विद्या-स्थलं यत्र नालन्दकम् ।
स्तूप-चैत्यैर्विहारोऽस्ति ख्यातिं गतो
भारतं तं नुमो भारतं तं नुमः ॥

( १३ )

क्रान्तिदूतः सुभाषो वसुर्भासते
बंकिमो देशभक्तो रवीन्द्रः कविः ।
रामकृष्णारविन्दादृता[1] बङ्गभूः,
भारतं तं नुमा भारतं तं नुमः ॥

( १४ )

नानको भक्तवर्यश्च शिष्याग्रणीः[2],
यत्र गोविन्दसिंहश्च सिंहोपमः ।
लाजपत्राचिता[3] पुण्यपञ्चालभूः[4],
भारतं तं नुमो भारतं तं नुमः ॥

( १५ )

यत्र राणाप्रतापः प्रतापाश्रयो
भक्त-मीरा सुवीरा प्रिया पद्मिनी ।
राजपुत्र-स्थली[5] जैन-पूजा-स्थली[6]
भारतं तं नुमो भारतं तं नुमः ॥

---

१. रामकृष्ण-परमहंसः, अरविन्दघोषश्च । २. सिक्खसंप्रदायप्रवर्तकः ।
३. लाला लाजपतरायः । ४. पंजाब-प्रदेशः । ५. राजपूताना-प्रदेशः ।
६. आबू-पर्वते जैनमन्दिरम् ।

( १६ )

यत्र गान्धिर्गुणाब्धिः पटेलः[१] सुधीः,
धर्ममूर्तिर्दयानन्द-स्वामी स्थितः ।
सोमानाथान्वितो गुर्जरो[२] राजते
भारतं तं नुमो भारतं तं नुमः ॥

( १७ )

लौह-संयन्त्र-भूमिर्भिलाई-युतो
विक्रमेणार्चितोऽवन्तिका-संगतः ।
मध्यदेशोऽत्र[३] भोपाल-सिप्रान्वितो
भारतं तं नुमो भारतं तं नुमः ॥

( १८ )

बालगङ्गाधरो[४] यत्र ज्ञानेश्वरः
सन्त-दासः[५] शिवाजी-शिवाराधितः ।
यत्र मुम्बापुरी तन्महाराष्ट्रकं
भारतं तं नुमो भारतं तं नुमः ॥

( १९ )

शंकरो[६] दिव्यधीर्यत्र रामानुजः
सायणो माधवो यत्र रामेश्वरम् ।
यत्र कर्णाट-संगीत-शोभा-स्थली
भारतं तं नुमो भारतं तं नुमः ॥

( २० )

यत्र क्रान्तेश्च शान्तेश्च दूताः स्थिताः,
ज्ञान-विज्ञान-शौर्य-स्थलं गीयते ।
विश्वबन्धुत्व-शिक्षा-प्रसार-स्थलं
भारतं तं नुमो भारतं तं नुमः ॥

---

१. सरदार-पटेलः । २. गुजरात-प्रदेशः । ३. मध्यप्रदेशः । ४. बाल-गंगाधरः तिलकः । ५. सन्तः समर्थगुरुः रामदासः । ६. शंकराचार्यः ।

## ७. जयतु जयतु मे भारतदेशः

( गीतिका )

( १ )

जयतु जयतु मे भारतदेशः,
जयतु गुणाञ्चित-गौरव-वेशः ।
वीर-प्रसूः सुषमाढ्य-मनोज्ञः,
वीर-वृन्द-परिपालित-देशः ।। जयतु० ।।

( २ )

शस्य-श्यामलो नव-रस-पूर्णः,
खग-रव-शोभित-द्रुम-दल-पूर्णः ।
नाना-नद-सरितां रव-तूर्णः
सुखद-सदागति-गति-रय-पूर्णः ।।जयतु०।।

( ३ )

हिमगिरि-शोभित-मञ्जु-किरीटः
विन्ध्य-मेखला-मणिमय-मध्यः ।
सागर-पूजित-पद-युग-रम्यः
शान्ति-सुधा-रस-गौरव-हृद्यः ।।जयतु०।।

( ४ )

विश्ववन्द्य-कविवृन्द-समिद्धः
ज्ञान-दीप्ति-श्रित-भूति-समृद्धः ।
तत्त्वज्ञान-गरिमाञ्चित-शुद्धः
शौर्य-धैर्य-बल-बुद्धि-प्रबुद्धः ।।जयतु०।।

( ५ )

मति-रति-भक्ति-विरक्ति-गुणाढ्यः,
कृति-तति-शक्ति-समन्वित-कायः ।
ज्ञान-भानु-कर-हृत-मल-शुद्धः
ऋद्धि-सिद्धि-सुषमा-सुसमृद्धः ।।जयतु०।।

( ६ )

सर्वकाल-सुषमा-परमाढ्यः,
कुसुम-समृद्धि-समेधित-शोभः ।
शाद्वल-शोभित-सुरभित-क्षेत्रः,
ज्ञान-भक्ति-कृति-रम्य-त्रिनेत्रः॥जयतु०॥

( ७ )

कालिदास-कपिलादि-प्रसिद्धः,
माघ-हर्ष-भवभूति-समृद्धः ।
गोतम-जैमिनि-दर्शन-सिद्धः,
उमा-रमा-गुण-गौरव-शुद्धः॥ जयतु० ॥

( ८ )

ज्ञानामृत-परितोषित-लोकः,
तत्त्वज्ञान-परिशोषित-शोकः ।
शान्ति-सुधा-रस-हृत-कलि-पापः,
कर्मयोग-हृत-मानस-तापः ॥ जयतु० ॥

( ९ )

गांधि-सुभाष-गुणावलि-वन्द्यः,
कवि-अरविन्द-रवीन्द्र-सुनन्द्यः ।
भक्तसिंह-तिलकाञ्चित-भालः
स्वामि-दयानन्दार्चित-पादः॥ जयतु० ॥

( १० )

शान्ति-क्रान्ति-समवाय-समिद्धः
शक्ति-भक्ति-नय-सिद्धि-समृद्धः ।
निखिल-विश्व-सुख-शान्ति-प्रणुन्नः,
भवतु भवे गुण-कीर्ति-प्रसिद्धः ॥ जयतु० ॥

## ८. प्रभो, तं भारतं रक्ष

( गीतिका )

( १ )

प्रभो ! दुःखाब्धि-संत्रातः !
सदेमं भारतं रक्ष ।
क्षुधा-शोकाग्नि-संतप्तं,
सदेमं भारतं रक्ष ॥ प्रभो० ॥

( २ )

सदा विश्वस्य यज्ज्योतिः,
सदा यः प्रेरणा-स्रोतः ।
भुवो मार्गोपदेष्टा यः,
सदा तं भारतं रक्ष ॥ प्रभो० ॥

( ३ )

श्रुतीनां यत्र संनादः,
यतीनां ज्ञान-संवादः ।
मुनीनां दर्शनोत्कर्षः,
सदा तं भारतं रक्ष ॥ प्रभो० ॥

( ४ )

भवे बन्धुत्व-शिक्षायाः,
सदैवाग्रेसरो योऽभूत् ।
सदाऽध्यात्मोपदेष्टा यो
मुदा तं भारतं रक्ष ॥ प्रभो० ॥

( ५ )

धरेयं त्रास-संत्रस्ता
क्षुधा-रोगाऽऽधि-संध्वस्ता ।
अशिक्षा-ध्वान्त-संग्रस्ता,
सुधा-वर्षैः सदा रक्ष ॥ प्रभो० ॥

( ६ )

सदा यः क्रान्ति-दूतानां
निनादैः पूर्यमाणोऽभूत् ।
सदा क्रान्तेर्निनादेन
सुदेशं भारतं रक्ष ॥ प्रभो० ॥

( ७ )

न शाम्येत् क्रान्ति-सन्देशः,
न रुन्ध्याद् राष्ट्र-सन्देशः ।
न नश्येत् चेतनोत्साहः,
तथैतं भारतं रक्ष ॥ प्रभो० ॥

( ८ )

धरेयं पाविता पूतैः,
स्व-रक्तैः क्रान्तिदूतैस्तैः ।
यशोमालां सदा विन्देत्,
तथैतं भारतं रक्ष ॥ प्रभो० ॥

( ९ )

ज्वलेद् विज्ञान-संज्योतिः,
प्रणश्येदाधि-दुःखाग्निः ।
चरेत् क्रान्तेश्च दावाग्निः,
तथैतं भारतं रक्ष ॥ प्रभो० ॥

(१०)

ऋषीणां ज्योतिषा पूतं
हुतात्म-त्याग-संपुष्टम् ।
सुधीनां कीर्ति-संजुष्टं
वरेण्यं भारतं रक्ष ॥ प्रभो० ॥

## ९. भारत-देशः

( गीतिका )

( १ )

देशोऽस्तु भारतो मे,
कीर्त्या श्रिया समिद्धः।
देशः प्रबुद्ध एषः
सुषमा-गुणैः समृद्धः ॥ देशोऽस्तु० ॥

( २ )

विश्वस्य शान्ति-हेतुः,
दैन्याऽऽधि-नाश-केतुः ।
गुण-गौरवैक-सेतुः,
ज्ञानोन्नतिं विदध्यात् ॥ देशोऽस्तु० ॥

( ३ )

कृषकाः कृषौ नियुक्ताः,
तपसा श्रमेण पुष्टाः।
धन-धान्य-भूति-युक्ताः,
हृष्टाः श्रिया भवेयुः ॥ देशोऽस्तु० ॥

( ४ )

ये दीन-हीन-लोकाः,
दुःखाग्नि-ताप-तप्ताः ।
शप्ताः सुखैर्वियुक्ताः,
तेषां समुद्धृतिः स्यात् ॥ देशोऽस्तु० ॥

( ५ )

श्रमजीविनो हि लोकाः
धनिभिस्तिरस्कृता ये।
वृत्त्यै च शोष्यमाणाः,
राज्येन रक्षिताः स्युः ॥ देशोऽस्तु० ॥

( ६ )

श्रम-शौर्य-दान-शक्तिः,
सत्याग्रहेऽनुरक्तिः ।
परमेश-प्रीति-भक्तिः,
प्रचरेत् समेऽपि लोके ॥ देशोऽस्तु० ॥

( ७ )

स्यादन्धभक्ति-नाशः,
नैर्घृण्य-दोष-ह्रासः ।
करुणा-दया-प्रहासः,
ज्योतिश्च जीवनेऽस्मिन् ॥ देशोऽस्तु० ॥

( ८ )

विश्वाभिराम-देशः
शौर्याप्त-सौख्य-कोशः ।
ज्ञानाग्नि-दग्ध-दोषः,
क्षेमं श्रियं प्रणुद्यात् ॥ देशोऽस्तु० ॥

( ९ )

क्रान्तेर्ध्वजं दधानः,
शान्तेश्च मन्त्रदाता ।
विश्वस्य ज्ञानदाता
दिव्यां धियं तनोतु ॥ देशोऽस्तु० ॥

( १० )

हिंसा-क्षुधा-विरोधः,
दीनाऽऽर्त-शोष-त्रासः ।
रोगाऽऽधि-दैन्य-दोषः,
शश्वद् विनाशमेयात् ॥ देशोऽस्तु० ॥

## १०. राष्ट्र-ध्वज-गीतम्

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

जयति त्रिवर्णं गुणगणपूर्णं
जगति समिद्धं सुषमाऽऽकीर्णम् ।
स्नेह-सौख्य-रस-गौरव-मानं
धृति-मति-शक्ति-सुधौघ-निधानम् ॥ जयति० ॥

( २ )

विश्व-शान्ति-हित-कृत-सन्देशं
भ्रातृभाव-समतैक-निदेशम् ।
चारु-चरित-कृत-जन-संतोषम्
आधि-व्याधि-भय-शोषण-शोषम् ॥ जयति० ॥

( ३ )

वीर-केतुरयमुच्छ्रित-दण्डः
शौर्य-प्रधर्षित-रिपु-दल-खण्डः ।
शत्रु-सैन्य दलनेन प्रचण्डः
क्रान्तिकारि-चरितामृत-चण्डः ॥ जयति० ॥

( ४ )

ध्वजमिममुन्नय, मातरमर्चय,
अञ्चय देशहितार्पित-जीवम् ।
भञ्जय शत्रुं, रञ्जय मित्रं
मण्डय देशं, खण्डय द्वेषम् ॥ जयति० ॥

( ५ )

केसर-श्वेत-हरित-गुणपूर्णैः
वर्णैर्भ्राजित-रुचिर-सुशोभम् ।
केसर-वर्णित-त्याग-तपोबल-
शौर्य-धैर्य-गरिमोच्चय-पूर्णम् ॥ जयति० ॥

( ६ )

श्वेत-वर्ण-धृत-शम-सन्तोषं
सत्य-अहिंसा-शान्ति-गुणौघम् ।
हरित-वर्ण-श्रित-वैभव-भावम्
उन्नति-प्रगति-विकास-गुणाढ्यम् ।।जयति०।।

( ७ )

धर्म-चक्र-संसूचित-धर्मं
धर्म-नयं धर्मार्पित-देहम् ।
प्रगति-सूचकं चक्रमिदं ते
सूर्य-चक्रमिव ह्रास-विकासम् ।। जयति० ।।

( ८ )

लोक-हिताय जगद्धित-हेतोः
भ्रातृभाव-समता-सुख-हेतोः ।
प्रगति-विकास-समुन्नति-हेतोः
विलसेद् राष्ट्रध्वजः सुख-सेतुः ।। जयति० ।।

( ९ )

क्रान्तिकारिभिर्जीवन-दानैः,
शान्ति-पथैः सर्वस्व-प्रदानैः ।
वीर-धीर-जन-जीवन-त्यागैः,
अर्चितमेतत् प्रतिपल-रम्यम् ।। जयति० ।।

( १० )

क्रान्ति-शौर्य-धृति-जीवन-दानं
शिक्षय लोकं, शोषय शोकम् ।
षष्टि-कोटि-जय-नाद-समुत्थं
विहरेद् विलसेद् गौरव-पूर्णम् ।। जयति० ।।

## ११. स्वाधीनता ( स्वातन्त्र्यम् )

( गीतिका ) ( भुजंग-प्रयातम् )

( १ )

स्वतन्त्राप्ति[1]रेषा सदा सौख्य-दात्री
भयानां प्रहर्त्री गुणानां प्रदात्री ।
त्वमेवासि लोके सदा मानदात्री
सदा कीर्तिदात्री सदा मोददात्री ॥ स्वतन्त्रा० ॥

( २ )

न त्वत्तः परं मानदं लोकमध्ये
न त्वत्तः परं सौख्यदं किंचिदस्ति ।
त्वमेवासि लोकस्य चैतन्य-दात्री
सदा प्रेरणाभूः सदा शक्ति-स्रोत ॥ स्व० ॥

( ३ )

विना त्वां जनाः शक्ति-कीर्त्यादि-हीनाः,
सुबुद्धेर्विहीनाः सदा मान-हीनाः ।
नराः पामरास्ते क्षुधा-दैन्य-त्रस्ताः,
अविद्याऽन्ध-ग्रस्ताः सदा शोक-ध्वस्ताः ॥ स्व० ॥

( ४ )

विना त्वां नृणां जीवनं मोघमेव
विना त्वां गतिः सर्वदा दुःखदैव ।
विना त्वां शिरस्थः सदा मृत्युरेव
विना त्वां विकासो न हर्षाप्तिरेव ॥ स्व० ॥

( ५ )

न यत्रास्ति ते दीधितिः[2] सौख्यमूला
न यत्रास्ति ते श्रीः सदा कीर्तिशीला ।
न राष्ट्रं न देशः प्रदेशो विशेषो
विना त्वां श्रितः कीर्तिमिष्टां श्रियं वा ॥ स्व० ॥

---

१. स्वातन्त्र्य-लाभः । २. किरणः, प्रकाशः ।

( ६ )

त्वमेवासि सौख्यस्य मूलं समन्तात्
त्वमेवासि कीर्त्यादिमूलं पुरस्तात् ।
त्वमेवासि मानस्य शक्तेश्च हेतुः
त्वमेवासि शस्त्रं त्वमेवासि हेतिः ॥ स्व० ॥

( ७ )

त्वदीये पदाब्जे मुदा देशभक्ताः
बलिं दत्तवन्तो मुदं प्राप्तवन्तः ।
त्वदर्चापरा ये नरा मातृ-भक्ताः
सदा स्थास्नु तेषां यशो राजतेऽत्र ॥ स्व० ॥

( ८ )

त्वमेवासि शक्तिः, त्वमेवानुरक्तिः,
त्वमेवासि सिद्धिः, त्वमेवासि ऋद्धिः ।
त्वमेवासि मन्त्रः, त्वमेवासि तन्त्रं,
त्वमेवासि शान्तिः, त्वमेवासि क्रान्तिः ॥ स्व० ॥

( ९ )

त्वमेवासि दुर्गा, त्वमेवासि लभ्या,
अधृष्या त्वमेवासि दुर्धर्षरूपा ।
सदा स्नेह-स्रोतः, सदा शक्तिस्रोतः,
त्वदीयां कृपां याचते सर्व-लोकः ॥ स्व० ॥

( १० )

सदा भारते ते कृपा संतता स्यात्,
त्वदर्चापरा भारतीया भवेयुः ।
विहाय स्वकं स्वार्थजातं जघन्यं
मुदा जीवनं तेऽर्पयेयुः पदाब्जे ॥ स्व० ॥

## १२. प्रयाण-गीतम्

( गीतिका )

( १ )

प्रयाहि वीर ! सन्ततं
प्रयाहि वीर ! सन्ततम् ।
प्रयाणमेव जीवनं,
प्रयाणमेव जीवनम् ॥ प्रयाहि० ॥

( २ )

जगत् प्रयाति संततं
धरा प्रयाति संततम् ।
मरुत् प्रयाति संततं
सरित् प्रयाति संततम् ॥ प्रयाहि० ॥

( ३ )

यतिः प्रयाति सन्ततं
मतिः प्रयाति सन्ततम् ।
चमूः प्रयाति संततं
घनः प्रयाति संततम् ॥ प्रयाहि० ॥

( ४ )

गतिः सुधौघ-दायिनी
गतिः सदेष्ट-साधनी ।
गतिः सुखावहा मता
गतिश्च दुःख-नाशनी ॥ प्रयाहि० ॥

( ५ )

प्रधृष्ट-शत्रु-संयुतां
चमूं विदारयन् सदा ।
जय-ध्वनिं प्रणोदयन्
जयं लभस्व संततम् ॥ प्रयाहि० ॥

( ६ )

स्व-मातृ-भारतीं स्तुवन्
स्व-देश-भक्तिमाश्रयन् ।
स्व-राष्ट्र-गौरवं भजन्
लभस्व गौरवं सदा ॥ प्रयाहि० ॥

( ७ )

इयं धरा हुतात्मभिः
स्व-रक्त-दान-पाविता ।
न शत्रु-दोष-दूषिता
तथा यतस्व संततम् ॥ प्रयाहि० ॥

( ८ )

अशेष-क्लेश-संतर्ति
समस्त-विघ्न-संहृतिम् ।
सदाऽऽत्म-शक्ति-संयुतः
सहस्व सिंहवद् मुदा ॥ प्रयाहि० ॥

( ९ )

सदाऽऽशिषा युतो भव
नतः स्व-मातृ-पादयोः ।
सदा श्रयस्व गौरवं
स्वदेश-भक्ति-भावितः ॥ प्रयाहि० ॥

( १० )

सदा अमित्र-मर्दनः
सदा सुदृप्त-भञ्जनः ।
स्वदेश-कीर्ति-केतनः
प्रयाहि सिंहवत् सदा ॥ प्रयाहि० ॥

•

## १३. राष्ट्र-रक्षा

( गीतिका ) (भुजंगप्रयातम् )

( १ )

स्व-देश-व्रते जीवनं येऽर्पयन्ति
यशस्ते भवे शाश्वतं स्थापयन्ति ।
इयं भारती भूः सदा देवपूज्या
सदा रक्षणीया सदा सेवनीया ॥

( २ )

स्वदेशस्य रक्षा-विधौ यः प्रणाशः
स्वरक्तस्य दानं श्रमस्यापि दानम् ।
चलं यच्च वित्तं क्षणध्वंसि वर्ष्म
स्वदेशार्पितं जायते शाश्वतं तत् ॥

( ३ )

इदं जीवनं वृक्ष-सस्योपमानं
सदा जायते नाशमत्यन्तमेति ।
ध्रुवं तत् स्थिरं तत् चिरस्थायि चैव
यदद्धार्ऽर्पितं देश-रक्षा-प्रयत्ने ॥

( ४ )

यशो ह्यक्षरं शाश्वतं चामृतं च
तनुर्नश्वरा चञ्चला क्षीणयोगा ।
स्वदेशस्य रक्षाव्रते कीर्तिरेव
यशश्चामृतं गौरवं चानवद्यम् ॥

( ५ )

न जाता मृता वा कियन्तः पृथिव्यां
कियन्तो न वा नाममात्रेण शिष्टाः ।
परं भूतले रोचिषा रोचमानाः
स्वदेश-व्रता भान्ति भास्वत्प्रकाशाः ॥

( ६ )

न चिन्तोचिता देहनाशस्य जातु
सदा चिन्तनीया प्रिया मातृभूमिः।
धरा मातृरूपा वयं पुत्रभूताः
स्वमात्रे समर्प्यं धनं जीवनं च ॥

( ७ )

धरा याचते ते बलिं नित्यमेव
धरा याचते रक्तदानं पवित्रम्।
अपत्यस्य शौर्येण दानेन नित्यं
यशो मातृभूमेः परां कोटिमेति ॥

( ८ )

स्वदेश-व्रता ये स्वदेहैरजस्रं
बलिं मातृभूम्यै ददत्यात्म-युक्ताः।
न तेषां भयं शस्त्रपातस्य शूलैः
स्वयं निर्भया निर्जरास्ते धरण्याम् ॥

( ९ )

भवे भीरवः कातराः स्वार्थलिप्ताः
मृतिं यान्ति भूयः श्व-काकादिवत् ते।
सुवीराः सुधीराः स्वदेशाभिमानाः
मृतिं वारमेकं प्रयान्तीह शूराः ॥

( १० )

यशो वै नृणां प्रेष्ठमेकं सदैव
यशोऽर्थं नृणां जीवनं वित्तमेव।
मुधा स्वं यशः किं कुरुध्वे जघन्यं
ध्रुवे नाश-योगे वरं देश-हेतोः ॥

●

## १४. स्वदेशानुरागः

( उपजातिर्वृत्तम् )

( १ )

न यत्र देशोद्धृति-कामनाऽऽस्ते
न मातृभूमेर्हितचिन्तनं च ।
न राष्ट्ररक्षा-बलिदान-भावः
श्मशान-तुल्यं नरजीवनं तत् ॥

( २ )

देशस्य रक्षा जनता-समृद्धिः
परोपकाराश्रयणेन वृत्तिः ।
परार्थ-चिन्ता पतितानुरागो
येष्वस्ति तेषां जनिरेव धन्या ॥

( ३ )

विनश्वरं मानव-वर्ष्म नित्यं
विनश्वरं भौतिकमीश्वरत्वम् ।
अनश्वरं शाश्वत-कीर्ति-दायि
स्वराष्ट्र-हेतोर्निज-देह-दानम् ॥

( ४ )

यस्मिन् स्वदेशस्य न गौरवं स्याद्
न चाभिमानं निज-देश-कीर्तेः ।
नराधमोऽयं नृ-पशुर्मतो मे
स्वदेशभक्त्या रहितो हितोऽपि ॥

( ५ )

देशोऽस्तु लक्ष्यं परमं त्वभीष्टं
देशानुरागः परमोऽनुरागः ।
स्याज्जीवनं वा मरणं च सद्यः
तत् सर्वमेवास्तु स्वदेश-हेतोः ॥

( ६ )

राष्ट्रस्य हेतोर्बलिदानभावो
राष्ट्रस्य कल्याणविधौ प्रयत्नः ।
रात्रिन्दिवं राष्ट्र-समृद्धि-चिन्ता
स्याज्जीवनस्य प्रथमोऽभिलाषः ॥

( ७ )

यस्मिन् सुधाऽऽसार-रस-प्रसारा
स्वदेश-भक्तिस्तनुते स्वजालम् ।
कर्तव्यमास्थाय तनुत्यजो ये
त एव धन्याः कृतकृत्यवर्याः ॥

( ८ )

सैवाधमो यत्र न देशभक्ति-
र्जागर्ति विद्युज्ज्वलनोपमाना ।
सा स्नेहदात्री सुख-शान्ति-दात्री
धात्री गुणानां यशसां श्रियां च ॥

( ९ )

स्व-जीवनोत्सर्ग-व्रता अजस्रं
प्राणान् जहुर्ये निज-राष्ट्र-हेतोः ।
शान्तेश्च क्रान्तेश्च व्रतं चरन्तः
त एव देवा अमराः सुराश्च ॥

( १० )

स्व-मातृ-हेतोर्निज-राष्ट्र-हेतोः
प्राणार्पणं स्याज्जनता-हिताय ।
समर्पणं लोकहिताय सर्वं
स्याच्चेतसो मे चरमोऽभिलाषः ॥

## १५. भारत-गौरवम्

( द्रुतविलम्बितम् )

( १ )

जयति भारत-राष्ट्र-वसुन्धरा
जयति गौरव-सौख्य-समुज्ज्वला ।
जयति जीवन-शक्ति-सुधाऽऽपगा
जयति भूति-विभूषित-विग्रहा ॥

( २ )

सकल-संसृति-संस्कृति-सूत्रधा
निखिल-मानव-मान-विवर्धिनी ।
दुरित-दुःख-भयौघ-निवारिणी
जयति भारतभूः सुखदा सदा ॥

( ३ )

नव-सुकीर्ति-समुज्ज्वल-शोभया
धृत-गुणावलि-दीप्ति-प्रदीपिता ।
सकल-लोक-विलोचन-रूपिणी
अभयदा वरदा सुख-सारिणी ॥

( ४ )

अमित-दान-वितोषित-मानवा
दहन-शक्ति-विनाशित-दानवा ।
विबुध-गीत-गुणोच्छ्रय-शालिनी
नव-यशस्तति-मौक्तिक-मालिनी ॥

( ५ )

गुणवतामनिशं हित-साधनी
कुकृतिनामनिशं भय-साधनी ।
अनुदिनं प्रगतिं दधती मुदा
हरति कस्य नरस्य न मानसम् ॥

( ६ )

निकष-घर्षण-जात-महात्विषो
दधति स्वर्णरुचं जयिनो जनाः ।
श्रम-विकास-गुणार्जन-विश्रुताः
जगति नेतृपदं दधते बुधाः ॥

( ७ )

खर-मरीचि-मरीचि-सम-प्रभाः
तुहिन-दीधिति-दीधिति-शोभनाः ।
वसुधरा वसुधा-हित-काम्यया
जहति वर्ष्म निजं समरे खरे ॥

( ८ )

नव-नवाङ्कुर-शाद्वल-शोभिनी
कुसुम-संहति-संभृत-माधुरी ।
हिम-समृद्धि-समेधित-गौरवा
वहति भारतभूर्गरिमोच्चयम् ॥

( ९ )

अरुणिमाऽऽनन-पद्मचये श्रितः
तरुणिमा युव-मानस-संस्थितः ।
मधुरिमा वचने हृदि कर्मणि
प्रथयतेऽस्य यशो भुवनेऽखिले ॥

( १० )

युधि जहुः कति नैव कलेवरं
वरममंस्त हुतात्मकतां न कः ।
प्रलय-वह्नि-समाः प्रलयावहाः
जगति वीरवराः श्रियमाश्रिताः ॥

( ११ )

श्रुति-निनाद-समुज्ज्वल-मानसाः
सुकृत-कर्म-विपाक-विभाभृतः ।
बुधवरा भुवि लब्ध-सुकीर्तयो
रुरुचिरेऽत्र जगद्धित-लालसाः ॥

( १२ )

वसुभृतो वसुधामवगाह्य ये
भव-विभूति-विभूषित-जीवनाः ।
वसुततिं निज-देश-हिताय ये
विपणिनो विजहुस्त इमेऽर्चिताः ॥

( १३ )

श्रमजयैर्विजयः क्व च नार्जितः
श्रमिभिरात्त-गुणोच्चय-शालिभिः ।
गुरुतरं गरिमाणमवाप्य ते
सकल-लोक-ललाम-सृतिं ययुः ॥

( १४ )

असम-शौर्य-प्रधर्षित-शत्रवो
निज-पतिव्रत-धर्म-श्रित-श्रियः ।
हितमवेक्ष्य भुवो धृतहेतयः
कथममूर्ललना न गुणास्पदाः ॥

( १५ )

वटुजनैर्यददर्शि स्वपौरुषं
समरमेत्य तदाऽऽङ्ग्ल-प्रशासकैः ।
जहुरिमे निजजीवनमाहवे
गुणवतामवतां च धुरि स्थिताः ॥

( १६ )

निजसुखान्यवमत्य धृतव्रताः,
भरत-भू-हित-साधन-तत्पराः ।
विबुध-वृन्द-सुगीत-गुणोच्चयाः,
यतिवरा भुवने श्रितकीर्तयः ॥

( १७ )

सकलमन्ध-तमस्तति-संततं
जगदभूदिदमेव शुचाऽऽकुलम् ।
श्रुति-निनाद-प्रणोदित-तामसाः
ऋषिवरास्त इमे महिता हिताः ॥

( १८ )

स्वयशसा तपसा च समेधिताः
सकल-लोक-हिताय कृतश्रमाः ।
निखिल-मोह-महासुर-नाशकाः
मुनिवराः प्रथिता भुवनेऽखिले ॥

( १९ )

भरत-भू-गुण-गौरव-कीर्तने
मतिरुदेति मुदा प्रमदावहा ।
स्व-धरणी-गुण-कीर्तन-विश्रुतः,
अमरतां लभते सुकविः सदा ॥

( २० )

भरत-भू-हित-चिन्तन-तत्पराः,
भरत-भू-हित-त्यक्त-कलेवराः ।
भरत-भू-गुण-गौरव-सत्कृताः,
भरत-भू-तनयास्त इमे सुराः ॥

●

## १६. राष्ट्रियं जागरणम्

( गीतिका ) ( भुजंगप्रयातम् )

( १ )

अये भारतीयाः ! यतध्वं यतध्वं
सुखं शान्तिमिष्टां लभध्वं लभध्वम् ।
सुखं दुःखजातं सहध्वं सहध्वं
विकासं प्रमोदं भजध्वं भजध्वम् ॥

( २ )

इयं क्रान्तिरिष्टा समे भारतेऽपि
प्रचारं प्रसारं भजेल्लोकहेतोः ।
युवा बालको बालिका वृद्धवर्यो
ददत्वात्मयोगं सदा देशहेतोः ॥

( ३ )

सदा संविधानस्य रक्षापराः स्युः
स्वदेशाभिमानं जने जागृयाच्च ।
जने वर्धतामादरो राष्ट्रकेतौ
नरो मोदमालां वहेद् राष्ट्रगीतौ ॥

( ४ )

सदा देशरक्षा, सदाऽऽदर्श-रक्षा
सदैवोच्च-भावाश्रया वृत्तिरिष्टा ।
विकास-प्रकाशो भवेद् ग्राम-मध्ये
ज्वलेज्ज्ञान-ज्योतिः समेषां मनःसु ॥

( ५ )

भवेद् देशकार्ये सदा चित्त-योगः
स्वदेशोन्नतौ स्यात् सदैवानुरागः ।
विकासस्य कार्ये मनोयोजनं स्याद्
दरिद्रातुराणां हितं प्रेप्सितं स्यात् ॥

( ६ )

प्रभुत्वं स्वदेशस्य लक्ष्यं सदा स्याद्
भवेदेकता राष्ट्रवृद्ध्यै जनेषु ।
अजस्रं वहेत् स्वाभिमानस्य धारा
सदा प्रेरिताः स्युर्जना देशभक्त्या ॥

( ७ )

जने जागृयाद् भ्रातृभावो भवाय
समत्वस्य भावोदयः स्यात् सुखाय ।
न धर्मो न भाषा न देशः प्रदेशो
भवेद् भेदकारी, न च क्षोभकारी ॥

( ८ )

यथैवादृताः स्युर्नरा लोकमध्ये
तथा योषितामादरः स्यादजस्रम् ।
न याने, न पाने, विवाहेऽन्यदा च
स्त्रिया आदरे न्यूनता लक्षिता स्यात् ॥

( ९ )

यथा संस्कृतिर्भारतीया प्रथेत
यथा गौरवं भारतीयं तनोतु ।
विहाय स्वकं क्षुद्रभावं श्रमेण
महत्त्वं प्रसार्यं भुवः संस्कृतेश्च ॥

( १० )

न दैन्यस्य भावोदयः स्याज्जनेषु
क्षुधा-हीन-भावावलिश्च प्रसर्पेत् ।
विलापः क्वचिन्न श्रुतः स्याज्जनानां
निवासाश्रयो वृत्ति-लाभार्थमेव ॥

( ११ )

विपत्तिः स्वदेशे यदैवाऽऽपतेत्तु
यदाऽऽह्वानलेशोऽपि रक्षार्थमायात् ।
तदा संगतैः सर्वमेवावमत्य
नरैर्भारतीयैः सदा भाव्यमेव ॥

( १२ )

दया-भाव-वृद्धिर्जने जीव-जाते
गवादेर्विवृद्धिः पशूनां सुरक्षा ।
नदीनां ह्रदानां वनानां नगानां
सुरक्षा कृता स्यात् पथामापणानाम् ॥

( १३ )

विकासं व्रजेद् भावना देशभक्तेः
नराणां हितायेहितं स्यादजस्रम् ।
सुधारे रुचिर्ज्ञानवृद्धौ प्रवृत्तिः
भवेद् दृष्टिकोणश्च विज्ञानमूलः ॥

( १४ )

न हिंसाश्रया वृत्तिरिष्टा जनेषु
भवेत् स्नेह-भावोदयः सौख्यकारी ।
सदा संपदो रक्षिताः स्युर्जनानां
समाजाश्रया वा नरैराश्रिता वा ॥

( १५ )

तथा स्याद् विकासो यथा लक्ष्यपूर्तिः
भवेद् राष्ट्रकार्ये, न रोधः क्वचित् स्यात् ।
समष्टेश्च व्यष्टेर्हितं स्यात् समानं
सदोत्कर्षकारी विकासः श्रियः स्यात् ॥

( १६ )

भवेद् राष्ट्रवृद्धिर्जनानां समृद्धिः
सुखं शान्तिरिष्टा सदैव प्रथेत ।
सदा स्याच्च यूनां सुदृष्टिः प्रकर्षे
गुणोच्छ्रायकार्ये समष्टेर्हिताय ॥

( १७ )

यथाऽऽलस्यलेशो न व्याघातकारी
भवेत् तादृशो मार्ग एवावलम्ब्यः ।
क्रियाशीलकत्वं महत्त्वाभिधानं
क्रियारोध एवात्मघाताभिधेयः ॥

( १८ )

प्रवृत्तिर्नराणां भवेद् राष्ट्रकार्ये
रुचिः स्याज्जनानां सुधारे विकासे ।
जनैराश्रितः स्यात्तु मार्गः प्रशस्तः
सुखोदर्क एवास्तु सर्वो विधिश्च ॥

( १९ )

स्वदेशे रतिः संस्कृतौ संस्कृतत्वं
सदा स्वाभिमानं महत्त्वं प्रकृष्टम् ।
सदाऽऽशाश्रयत्वं निराशाक्षयश्च
गुणोत्कर्षहेतोर्मुदाऽऽधेयमेव ॥

( २० )

स्वदेशस्य माहात्म्यमिष्टं भवेच्चेत्
स्वदेहस्य त्यागो वरं देशहेतोः ।
स्वदेशाश्रया श्रीर्नृणां जीवनं च
स्वदेशे समृद्धे सुखं सर्वमेव ॥

## १७. राष्ट्रियं कर्तव्यम्

( तोटकम् )

( १ )

सुखदा वरदा भय-ताप-हरी
भव-भूति-विभूषित-सौख्यकरी ।
नव-संस्कृति-संस्कृत-संहृति-दा
भरतावनिरस्तु सदा प्रथिता ॥

( २ )

नव-जागरणं प्रथतां भुवने
नव-दीप्ति-रुदेतु मनःसु सदा ।
नव-शक्ति-समुच्चय-शोभित-धीः
जनता जन-ताप-हरी विलसेत् ॥

( ३ )

नहि मानवता नवता-रहिता
नहि दानवता नवता-सहिता ।
नवतां प्रतिपद्य समे भुवने
दनुजावलि-नाशनमस्तु कृतिः ॥

( ४ )

कृतिनां कृतिरस्तु जनोद्धरणं
जन-मानस-मान-समुद्धरणम् ।
नव-चेतनता तनुतां नवतां
सकले विकलेऽपि जने प्रमुदे ॥

( ५ )

युवशक्तिरियं जन-शक्ति-युता
जन-ताप-हृतौ लभतां सुयशः ।
व्यपनोद्य तमस्तति-संसरणं
निज-राष्ट्र-हिते रुचिमावहताम् ॥

( ६ )

नहि सा भुवने कठिनाऽपि कृतिः
युव-शक्तिरियं न करोतु मुदा ।
जन-शिक्षणमार्थिकमुन्नयनं
पतितार्त-दशोद्धरणं भरणम् ॥

( ७ )

युवकेषु विराजत एव विभा
गुण-शक्ति-समुच्छ्रय-संकलनम् ।
मृदुता दृढता विनयावनतिः
गुण-संग्रहणेऽभिरुचिः सुकृतौ ॥

( ८ )

युवका निजकर्मणि सन्तु दृढाः
पर-दुःख-निवारण-सक्त-धियः ।
गुण-गौरव-शौर्य-सुधा-सरसाः
सरसामवनिं दधतां कृतिभिः ॥

( ९ )

अबला नहि सन्त्यबला अधुना
सबलाः प्रबला नय-वर्त्म-विदः ।
नव-जागरणे दधतेऽभिरुचिं
नय-कर्मणि शर्मणि वर्मणि च ॥

( १० )

प्रमदाः प्रमुदा मुदमादधतां
निज-देश-समुद्धरणे निरताः ।
विरताः परदेश-परंपरया
शुभ-शक्ति-समन्वित शौर्य-युताः ॥

( ११ )

सुधियो ह्यवमत्य निजं व्यसनं
निजराष्ट्र-हिते सुकृते निरताः।
वर-वर्त्म-निबोधन-शक्त-धियो
विलसन्तु भवे भव-ताप-हराः ॥

( १२ )

अयि शूरवराः प्रखराः प्रबलाः
रिपु-संहति-नाशन-सक्त-हृदः ।
समरे प्रखरे च विनाश्य रिपून्
गुरु-गौरव-माप्नुत शौर्य-धनाः ॥

( १३ )

वणिजो निज-वित्त-चयं ददतां
पतितार्त-हिताय सुखाय सदा।
मलिनां सरणिं परिहृत्य निजां
निज-देश-हिताय धनं दधताम् ॥

( १४ )

श्रमिणोऽपि श्रमे रुचिमादधतः
स्व-यशः प्रथयन्तु समे भुवने।
श्रम एव समुन्नति-सिद्धि-करः
श्रम एव सुकीर्तिकरः सुखदः ॥

( १५ )

श्रम एव हितं कुरुते भुवने
श्रम एव समीहितमालभते।
श्रम एव गुणोच्छ्र्यमातनुते
श्रम एव सुखौघ-समृद्धि-करः ॥

( १६ )

इदमार्थिकमुन्नयनं प्रसरेद्
नव-योजन-योजन-संवलितम् ।
दयनीय-दशाः पतिताः क्षुधिताः
मुदिता हृषिताः स्युरिमे सुखिताः ॥

( १७ )

निज-राष्ट्र-हितं सततं प्रबलं
निज-जीवन-दान-मपीह शुभम् ।
निज-देश-हिते मरणं सुखदं
निज-वित्त-समुच्चय-संन्यसनम् ॥

( १८ )

विलसेद् वसुधा, विकसेद् जनता,
धन-धान्य-समुन्नतिरस्तु शुभा ।
नव-शक्ति-समुच्चय-शान्तधियो
नर-वीर-वरा विलसन्तु सदा ॥

( १९ )

न विरोधकृतां गतिरस्तु शुभा
नहि देशहिताय विरोध-मतिः ।
समवेत्य समे निज-राष्ट्र-हिते
दधतां स्व-मनांसि मनस्विवराः ॥

( २० )

युव-शक्ति-चये जनता-हृदये
नव-शक्ति-चयो विलसेत् प्रसरेत् ।
वसुधाऽस्तु सुधालय-सौख्य-करी
भरतावनिरस्तु मुदे प्रमुदे ॥

●

# १८. राष्ट्रोद्बोधनम्

( उपजातिर्वृत्तम् )

( १ )

प्रवर्तितं साधु प्रशासनेन
यद् योजनाऽऽयाजनमत्र हृद्यम् ।
सर्वस्य साहाय्यमपेक्षते तद्
हृदा प्रयोज्यं सुख-शान्ति-हेतोः ॥

( २ )

राष्ट्रस्य वृद्ध्यै जनता-समृद्ध्यै
प्रवर्तितं योजन-सूक्ष्म-जालम् ।
देशः श्रिया श्लिष्यतु येन सद्यो
दोनार्त-लोकोद्धृति-रक्षणं स्यात् ॥

( ३ )

उद्योगमास्थाय विकास-कार्ये
औद्योगिके वा कृषि-कार्य-जाते ।
तन्त्राश्रिते यन्त्र-समाश्रिते च
सर्वात्मना साधु प्रयत्यमेव ॥

( ४ )

देशस्य रक्षामधिश्रित्य सद्यः
स्याज्जागरूकत्वमजस्रमेव ।
विरोधि-शक्तेर्दलनेन नित्यं
स्वपौरुषस्याभिनवा विवृद्धिः ॥

( ५ )

बलं निधीयेत विकास-कार्ये
समाज-कल्याण-परम्परासु ।
स्यादेकता सौख्यकरी जनेषु
विभेदलेशो न भुवं स्पृशेच्च ॥

( ६ )

भाषाश्रितः प्रान्त-समुत्थितो वा
धर्माश्रयो जाति-विवर्ग-निष्ठः।
यः कोऽपि भेदो न स वृद्धिमेयात्
सर्वे वयं भारत-भू-सुपुत्राः ॥

( ७ )

राष्ट्रस्य वृद्ध्यै नितरामपेक्ष्यः
श्रमः कठोरो मनुजैः समस्तैः।
निर्माणमूला प्रहिता सुदृष्टिः
स्यात् सर्वकार्येषु मनोबलाढ्या ॥

( ८ )

देशे विदेशे यदि वा कुचक्रं
स्वातन्त्र्य-नाशाय प्रवर्तितं स्यात्।
ध्वंस्यं प्रमथ्यं च तदायसेन
करेण सर्वैर्दृढ-निश्चयेन ॥

( ९ )

आचारहीनत्वमुपेक्षणं च
भ्रष्टाऽऽश्रयाऽऽचार-परंपरा वा।
अनैतिकत्वं परशोषणं च
सर्वं समाप्यं निजराष्ट्र-वृद्ध्यै ॥

( १० )

शान्त्यै प्रगत्यै अवमत्य भेदान्
लोकाः समे संघटिता भवेयुः।
चारित्रिकीं प्राप्य समुन्नतिं च
सर्वापराधापनयः क्रियेत ॥

●

## १९. भारतीय-जनतन्त्रोपलब्धयः

( उपजातिर्वृत्तम् )

( १ )

यल्लोकतन्त्रोद्धरणाय हृद्यं
प्रक्रान्तमासीज्जनता-हिताय ।
आयोजनं पञ्च-सुवर्ष-मूलं
साफल्यमाप्तं सुख-शान्ति-वृद्ध्यै ॥

( २ )

कृषेर्विकासाय नवप्रयोगैः
यन्त्रैर्नवैः क्रान्ति-समुद्भवोऽभूत् ।
हरिच्छद-क्रान्ति-समुन्नयार्थं
विधिर्नवो लोक-मनोहरोऽभूत् ॥

( ३ )

यत्रापि कुत्रापि कृषेस्तु योग्या
भूमिर्दृशोर्गोचरतामयासीत् ।
राज्येन संगृह्य तथाविधा भूः
कृषौ प्रयुक्ता जनता-समृद्ध्यै ॥

( ४ )

संसेचनार्थं परियोजना याः
युक्ताः प्रयुक्ताश्च विभिन्नभागे ।
क्रान्तिः कृषौ हर्ष-समुद्भवश्च
व्यलोकि लोकैर्जन-मानसेषु ॥

( ५ )

उद्योग-क्षेत्रे नव-पारपत्र-[1]
प्रदान-कार्यस्य विधिः ऋजूकृतः ।
येनात्म-नैर्भर्य-समाश्रयेण
विकास-कार्य-प्रगतिः प्ररुढा ॥

---

१. लाइसेन्सः ।

( ६ )

यच्चार्यभट्टो गगने चकासन्
भूपग्रहो भाति श्रयन् सुकीर्तिम् ।
स भारतीयार्य-जनस्य लोके
वैज्ञानिकीमुन्नतिमातनोति ॥

( ७ )

यद् भारतीयैः परमाणु-अस्त्र-
परीक्षणे या कृतिता त्वदर्शि ।
वैज्ञानिकानां गरिमाणमेतद्
लोकत्रयेऽपि प्रथयत्यजस्रम् ॥

( ८ )

विद्युद्गृहाणामणु-चालितानां
संस्थापनं भारत-गौरवाय ।
फ्रिगेट-नाम्नां जल-पोतकानां
निर्माणमिष्टां श्रियमादधाति ॥

( ९ )

औद्योगिकं प्रापयितुं विकासं
संयन्त्रकाणीह प्रवर्तितानि ।
संलौह[1]-वृद्ध्यै परिशोधनार्थं
तैलस्य, चैवोर्वरकस्य देशे ॥

( १० )

या चाप्यपूर्वा समुपागता श्रीः
भव्यं नवं भारतवर्षमेतत् ।
बङ्गाहवे पाक-चमूं दलन्तं
स्थले जले व्योम्नि च सर्वतोऽपि ॥

---

१. इस्पात इति

( ११ )

पाकैर्विपाको युधि यश्च लब्धः
स्वक्रूर-कृत्यस्य नृशंसतायाः।
पैशाचिकं चाचरितं जघन्यं
कृत्यं फलं तत् तनुतेऽनुरूपम्॥

( १२ )

बङ्गीय-बाला वनिता नराश्च
संपीडिताः शान्तिलवं न भेजुः।
अवाप्य ते भारत-भू-सुसख्यं
स्वातन्त्र्यमाप्ता विनयावनम्राः॥

( १३ )

लक्षाधिकाः पाकचमूचरा ये
योधा गृहीता विवशा विवर्णाः।
लब्धं फलं तैर्निज-धृष्टतायाः
ते चान्वभूवन् नरकं पृथिव्याम्॥

( १४ )

यश्चापि संधिः शिमला-प्रदेशे
देश-द्वयेऽभूद् जनता-हिताय।
आश्रित्य तं भारत-पाक-देशे
संबन्ध-सामान्यमुपागतं च॥

( १५ )

आदृत्य लोकस्य विचार-जातं
प्रान्ता नवीना विहिताश्च केचित्।
मेघालयश्च अरुणाचलश्च
मणेःपुरं च त्रिपुराभिधानः॥

( १६ )

संचिन्त्य देशैक्यमवेक्ष्य नीतिं
राज्यं गृहीतं सिखिमाभिधानम्।
संप्रेक्ष्य चैवं जनता-मतं तु
अभूदिदं भारत-भूमि-भागम् ॥

( १७ )

यल्लोकतन्त्रं, निरपेक्षिता च
धर्मे, व्यवस्था विनियोजिताऽर्थे।
सामाजिकी स्यात् प्रगतिः प्ररूढा
सैवाऽऽश्रिता नीतिरहसभावात् ॥

( १८ )

शान्तिः स्वदेशे, प्रगतिर्विकासे,
मैत्री विदेशैः, करुणाऽऽर्तदेशे।
निर्भीकताऽऽजौ, विमतिर्विरोधे,
सर्वोदया नीतिरुपास्यते च ॥

( १९ )

अर्थ-व्यवस्थां सुविरूढ-मूलां
कर्तुं श्रिता नीतिरुदार-भावा।
लोकाश्रयोद्योग-परम्पराणाम्
अग्रेसरत्वं प्रतिपादितं च ॥

( २० )

राष्ट्रीकृताः केचन लब्धवर्णाः
उद्योगजाता नृहितं समीक्ष्य।
समार्जिता च सुविधा समस्ता
राज्ञां समत्व-प्रतिपादनार्थम् ॥

( २१ )

अवर्षणादेः कृषि-कार्य-जाते
रुद्धो विकासो जन-शोषणाय।
हरिच्छद-क्रान्तिमुपास्य सर्वो
रोधोऽवरुद्धः कृषकार्थ-सिद्ध्यै ॥

( २२ )

मुद्रा-गत-स्फीति-निवारणार्थं
समाश्रिताश्च बहवो ह्युपायाः।
साफल्य-लाभाद् जनता-मनःसु
विश्वास-भावोदय-वृद्धिरासीत् ॥

( २३ )

उद्योग-कृत्ये कृषि-कार्य-जाते
निरन्तरं वृद्धिमुपैति राष्ट्रम्।
प्रवर्तिते योजन-कार्य-जाते
व्यलोकि लोकैरुदयः समस्तैः ॥

( २४ )

कठोर-दण्डाश्रयणेन राष्ट्रे
विलोक्यते संयम-वृद्धिरिष्टा।
शान्तिर्व्यवस्था स्वनुशासनं च
तापार्त-लोके धृतिमादधाति ॥

( २५ )

उन्मूलितास्ते ऋणजाश्च बन्धाः
प्रणाशितं शोषित-शोषणं च।
दीनार्त-लोकोद्धरणं समीक्ष्य
भूमिः प्रदिष्टा सुख-वास-हेतोः ॥

( २६ )

आक्रामका येऽविरतं यतन्ते
देशा अशेषा अहितं निरीक्ष्य ।
तेषां विमर्दार्थमभीष्ट-साधनी
नृ-वाहिनी सिंह-सम-क्रमाऽऽस्ते ॥

( २७ )

संचार-कार्ये विपुला विवृद्धिः
इष्टा विशिष्टा प्रगतिं तनोति ।
दूरेक्षणे दूर-प्रभाषणे च
समुन्नतिः कस्य मुदं न धत्ते ॥

( २८ )

ग्रामेषु पुर्यां नगरेषु चैव
चिकित्सकानां भिषजां नियुक्तिः ।
आरोग्य-हेतोर्नव-यन्त्र-वृद्धिः
शय्या-विवृद्धिश्च हितं तनोति ॥

( २९ )

शिक्षा-प्रसाराय प्रवर्तिताश्च
राज्येषु नूत्ना विविधा ह्युपायाः ।
शुल्क-प्रमुक्ति-र्बुक-बैंक-युक्तिः
प्रोत्साहनार्थं बहु-छात्रवृत्तिः ॥

( ३० )

स्त्रीणां च यूनां च हिताय प्रेष्ठाः
कार्यक्रमाः शासन-दिष्ट-रूपाः ।
एवं प्रदृष्टा नव-योजनान्ते
समुन्नतिः सर्व-दिगाश्रया सा ॥

## २०. नवयोजना-साफल्यम्

( द्रुतविलम्बितम् )

( १ )

सुखद-सिद्धिकरं नवयोजनं
दिशतु भारत-भू-वलये सुखम् ।
अनुदिनं जनता जन-ताप-हं
स्वकृतिमिश्च समर्थनमेधयेत् ॥

( २ )

इदमभेद्य-तमस्तति-नाशकं
दुरित-दुष्कृत-दैन्य-निवारकम् ।
सुकृत-शान्ति-सुधारस-वर्षकं
जयतु सन्ततमेव नियोजनम् ॥

( ३ )

वसन-भोजन-पेय-समुच्चयो
भवन-भूति-निवास-सुखोच्चयः ।
कृषि-समुन्नति-राष्ट्र-गुणोच्छ्रयो
वसतु भारत-भू-जनताऽऽलये ॥

( ४ )

नव-नवोद्यम-शक्ति-प्रदोद्यमोऽ-
नवरतं वसु-वृद्धि-करः श्रमः ।
सततमात्म-हिताय श्रमाश्रयो
दिशति शर्म सुखौघ-समेधितम् ॥

( ५ )

कृषिकृतौ नलकूप-समाश्रयः
प्रतिदिशं तनुते कृषि-वर्धनम् ।
हरितिमा हरते कृषकाऽऽवलेः
सकल-दुःखर्तात सुख-साधनैः ॥

( ६ )

भवन-हीन-जनैर्भवनं कृतम्
अवनि-हीन-नरैरवनिः श्रिता ।
वसन-हीन-नृभिर्वसनं धृतं
कृषि-विहीन-नरैः कृषिभूर्वृता ॥

( ७ )

प्रतिदिशं नगरेषु सुखोच्चयः
प्रतिपदं सुषमा श्रमिणां गृहे ।
भवन-भोजन-सौख्य-समुच्छ्रयो
वसन-वास-सुखं तनुते हितम् ॥

( ८ )

नव-विधान-समाश्रयणेन यद्
हितमिदं विहितं हित-काम्यया ।
ऋणज-बन्धन-ग्रस्त-जनावलिः
सुखद-मुक्तिमहो लभतेतराम् ॥

( ९ )

धनिवरा धन-संग्रहमेव ये
हितधिया व्यदधुर्दुरितावहम् ।
सकलमेव तु तद्धन-संग्रहम्
अपहृतं नृ-हिताय प्रशासकैः ॥

( १० )

निखिल-ग्रामचयेऽद्य विराजते
विपुल-विद्युदुपस्कर-संग्रहः ।
कृषिज-धान्यततिर्वसनावलिः
नव-विकासज-सौख्य-समुच्चयः ॥

( ११ )

सुखविधा विविधा नगरेषु च
प्रतिपदं वितनोति सुखश्रियम् ।
सरणि-नीर-प्रकाश-गृहाश्रयाः
कतिविधाः सुविधा नहि लम्भिताः ॥

( १२ )

सततमद्य विलोक्यत एव यत्
प्रशमिता जन-ताप-करी कृतिः ।
वटुजने नगरे न पुरेऽपि च
क्वचिद-शान्ति-ततिस्तनुते पदम् ॥

( १३ )

वटुजने विततऽभिरुचिर्गुणे
श्रमचये रुचिरा हितधीः श्रिता ।
जन-हिताय समाज-सुखाय ते
श्रममवेक्ष्य हितं दधते शिवम् ॥

( १४ )

पठन-पाठन-साधन-संग्रहे
हिततर्तिं तनुतेऽत्र प्रशासनम् ।
वटुजनस्य च शिक्षक-संहतेः
दिशति शासनमद्य सुखावलिम् ॥

( १५ )

गुणधि-गांधि-महात्मभिराश्रिता
भरत-भू-विषये रुचिरा स्थितिः ।
सुखमहो स हि स्वप्न-समुच्चयः
सफलतामिह याति सुखावहः ॥

( १६ )

प्रतिदिनं यदुपैत्युपयोगितां
तदिह वस्तु नियन्त्रित-मूल्यकम् ।
न सहतेऽर्घ-विवृद्धिमथ क्वचिद्
अनय-वारण-दारुण-शासनम् ॥

( १७ )

कृषक-कर्मणि ये नियतं रताः,
धरणिमापुरिमे कृषि-कर्मणे ।
वितरतीह प्रशासन-सूत्रकं
जलमलं विमलं वर-बीजम् ॥

( १८ )

लयमुपैति कुरीति-प्रथाऽखिला
प्रशममेति दिवं गमनं क्षुधा ।
सुखदमेत्यनुशासन-जालकम्
उदयमेति च भारत-गौरवम् ॥

( १९ )

प्रतिदिशं परिवर्तनमीक्ष्यते
प्रतिगृहं धन-धान्य-समुच्चयः ।
प्रतिजनं जनता-हित-लालसा
प्रतिपलं प्रगतिः सुख-साधने ॥

( २० )

वरद-योजन-कार्यमिदं मुदे
सुख-समुन्नति-शान्ति-हितावहम् ।
जन-मनःसु दधद् नवचेतनां
सकललोक-समर्थनमावहेत् ॥

## २१. भारतस्य विजयोद्घोषः

( उपजातिर्वृत्तम् )

( १ )

बालप्रणाशं बुधवृन्दहानिं
बङ्गोद्भवानां वधमार्यनाशम् ।
दुर्वृत्तपाकैर्हृतदार-बन्धुं
विलोकयन् को लभते न क्षोभम् ॥

( २ )

अनार्यपाकैर्भुवि भारते यो
व्यधायि घातः स्वविनाशहेतोः ।
दैत्य-प्रणाशार्थमभिप्रवृत्तो
दोप्ताशयोऽभूत् सफलो जनौघः ॥

( ३ )

पाकस्य भू-व्योम-समुद्रमध्ये
कृतः प्रहारो वर-भारतीयैः ।
योधैस्तथा येन समग्रमेव
पाकस्थलं प्राप विनाशलीलाम् ॥

( ४ )

संप्रेक्ष्य वीरान् वर-भारतीयान्
निराशया शत्रुप्रवीर-योधाः ।
संत्यज्य शस्त्राणि गृहाणि युद्धं
भयाकुलाः स्वात्मसमर्पणं दधुः ॥

( ५ )

जगत् समग्रं प्रविलोक्य शौर्यं
जय-ध्वनिं संतनुते समोदम् ।
शौर्यप्रकर्षाहित-कीर्त्ति-लक्ष्मी-
र्विराजते भारतभूर्मनोज्ञा ॥

## २२. लोकतन्त्रं जयेत्

( स्रग्विणी वृत्तम् )

( १ )

लोकतन्त्रं हितं लोकतन्त्रं सुखं
लोकतन्त्राश्रया वृत्तिरिष्टा जने ।
लोकतन्त्रे जनानां समृद्धिः शुभा
लोकतन्त्रे जनानां विवृद्धिः ध्रुवा ॥

( २ )

लोकतन्त्रे जनानां मतं शासनं
लोकतन्त्रे जनानां हितं साधनम् ।
लोकतन्त्रे जनानां प्रभुत्वं मतं
लोकतन्त्रे जनानां गुरुत्वं मतम् ॥

( ३ )

लोकतन्त्रे क्रिया राष्ट्र-संवर्धनी
लोकतन्त्रे गतिर्गौरवाधायिनी ।
लोकतन्त्रे सृतिः सत्यनिष्ठा मता
लोकतन्त्रे धृतिः सर्व-दुःखौघहा ॥

( ४ )

लोकतन्त्रे न किं किं सुखं साध्यते
लोकतन्त्रे न किं गौरवं प्राप्यते ।
लोकतन्त्रे न किं मानमासाद्यते
लोकतन्त्रे न वा किं हितं लभ्यते ॥

( ५ )

लोकतन्त्रे न धर्मादि-भेदो मतः,
लोकतन्त्रे न जात्यादि-भेदः शुभः ।
लोकतन्त्रे न वा शोषणं संमतं
लोकन्त्रे न हिंसा-प्रवृत्तिर्वृता ॥

( ६ )

लोकतन्त्रे गुणाः सर्व-धर्मोदयो
वर्ण-भेदो न वा वर्ग-भेदो मतः ।
लोकतन्त्रे न व्यष्टेर्महत्त्वं मतं
लोकतन्त्रे समष्टेर्गुणाः संहताः ॥

( ७ )

लोकतन्त्रे न दैन्यं न वा शोषणं
क्षुत्पिपासाऽऽधि-व्याधेः सदा शोषणम् ।
दीन-हीनार्त-लोकस्य संरक्षणं
संस्कृतेर्रक्षणं सभ्यता-रक्षणम् ॥

( ८ )

लोकतन्त्रे गुणाः, वर्जिता सा घृणा,
लोकतन्त्रे प्रियं, वर्जिता यातना ।
लोकतन्त्रे सुखं, वर्जितं शोषणं
लोकतन्त्रे हितं, वर्जितं पीडनम् ॥

( ९ )

लोकतन्त्रे शिवं सुन्दरं राजते
सत्यभावाश्रयः सत्य-कर्माश्रयः ।
विश्वबन्धुत्व-भावोदयः संततं
विश्वशान्तेश्च क्रान्तेश्च मार्गो मतः ॥

( १० )

लोकतन्त्रे तु निर्वाचनं मन्यते
लोकतन्त्रे मतं संमतं गण्यते ।
लोकतन्त्राश्रया राजनीतिर्मता
लोकतन्त्राश्रयैव व्यवस्था मता ॥

(११)

लोकतन्त्रे तु राज्यं मतं साधनं
लोक-सौख्यं सदा साध्यमेवाश्रितम् ।
व्यक्ति-स्वातन्त्र्यमेवात्र मुख्यं मतं
निर्णयो निग्रहो वा मतेनाऽऽस्थितम् ॥

(१२)

लोकतन्त्रे मतानां महत्त्वं मतं
राजनीतिश्च निर्वाचने संस्थिता ।
राजतन्त्रं तु निर्वाचितैश्चाल्यते
राष्ट्रसूत्रं च तैरेव संधार्यते ॥

(१३)

लोकतन्त्रे विधानं सुधारो विधिः,
निर्णयो निग्रहो लोक-संस्थापनम् ।
देशनीतिर्विदेशस्थ-नीतिः समा
लोक-निर्वाचितैरेव निर्णीयते ॥

(१४)

लोकतन्त्रेऽधिकाराः समे मौलिकाः,
राजनीतिः समानाधिकाराश्रया ।
बन्धुता मित्रता स्निग्धता संश्रिताः,
भ्रातृभावोदयः सौख्य-संचारकः ॥

(१५)

ग्राम-पञ्चायतानां दृढा संस्थितिः
मण्डलानां विभिन्नाश्च संस्थाः स्थिताः ।
स्थानमूलं स्वराज्यस्य संस्थापनं
लोकतन्त्रस्य मूलं मतं सर्वतः ॥

(१६)

लोकतन्त्रं तु वेदादिभिः स्वीकृतं
विश्ववन्द्यैः सुधीभिश्च संमानितम् ।
लिकनेनादृतं[१] गान्धिना पोषितं
विश्वशान्तेश्च सौख्यस्य मूलं मतम् ॥

(१७)

लोकतन्त्रे स्थिता देशभक्तिर्दृढा
देशरक्षा सुरक्षा स्वराज्यं शुभम् ।
देशभक्ति विना देशरक्षां विना
जीवितं निष्फलं निष्फलं निष्फलम् ॥

(१८)

लोकतन्त्रे विकासो विलासो ध्रुवः,
आर्थिकी उन्नतिः मौलिकी उद्गतिः ।
उद्यमस्यापि पूर्णं महत्त्वं मतं
भाषणे लेखने चापि स्वातन्त्र्यकम् ॥

(१९)

लोकतन्त्रे स्वदेशेऽस्ति शान्तिर्दृढा
क्रान्तिरिष्टा मतानां प्रयोगाश्रया ।
क्रान्ति-शान्त्योश्च संमेलनं दृश्यते
दुःख-दावाग्नि-नाशोऽत्र संस्थीयते ॥

(२०)

लोकतन्त्रं सुखस्यैक-मूलं मतं
लोकतन्त्रं मतं शान्ति-संस्थापकम् ।
लोकतन्त्रं भजेत्, लोकतन्त्रं श्रयेत्,
लोकतन्त्रं जयेत्, लोकतन्त्रं चरेत् ॥



---

१. अमेरिका-राष्ट्रपतिः अब्राहम-लिंकनः ।

## २३. स्वाधीनता-दिवसः

( गीतिका )

( १ )

स्वाधीनता-दिनं स्याद्,
जनता-हिताय नित्यम् ।
सुख-गौरवाभिवृद्धिः,
लोकं श्रयेदजस्रम् ॥ स्वाधीनता० ॥

( २ )

वीरैः स्व-रक्त-दानैः,
धीरैः स्व-देह-दानैः ।
शक्तैः स्व-देश-भक्तैः
लब्धं स्वराज्यमेतत् ॥ स्वा० ॥

( ३ )

आत्माहुतिः प्रदत्ता,
यैः राष्ट्र-धर्म-हेतोः ।
स्वार्थं विहाय, सर्वे
ते देव-तुल्य-वन्द्याः ॥ स्वा० ॥

( ४ )

राष्ट्राय गौरवं स्यात्
तेषां स्वदेश-भक्तिः ।
स्वार्थार्पणेन सर्वे
स्युर्देशभक्ति-युक्ताः ॥ स्वा० ॥

( ५ )

भागीरथ-श्रमेण
स्वाधीनतेयमाप्ता ।
रक्ष्या च पोषणीया
निज-जीवनार्पणेन ॥ स्वा० ॥

( ६ )

देशाः समेऽपि लोके,
स्वातन्त्र्य-लाभ-तुष्टाः ।
रक्षन्ति रक्तदानैः,
स्वातन्त्र्यमेव नित्यम् ॥ स्वाधीनता० ॥

( ७ )

स्वार्थं विहाय गर्ह्यं
रक्षन्तु देशभक्ताः ।
शक्ता विरक्त-भावाः
स्वातन्त्र्यमेव शश्वत् ॥ स्वा० ॥

( ८ )

स्वाधीनता सुखानां
मूलं गुणोच्चयानाम् ।
शक्तेर्धृतेश्च शान्तेः
मानस्य गौरवस्य ॥ स्वा० ॥

( ९ )

राष्ट्र-प्रकर्ष-हेतुः,
पतिताऽऽर्ति-नाश-हेतुः ।
हीनाऽऽर्त-शोक-त्राता
धान्यादि-वृद्धि-हेतुः ॥ स्वा० ॥

( १० )

धन-धान्य-शान्ति-तुष्टाः,
वस्त्रान्न-वास-हृष्टाः ।
पुष्टाश्च भारतीयाः
स्युर्देशप्रेम-पूताः ॥ स्वा० ॥

## २४. गणतन्त्र-दिवसः

( गीतिका )

( १ )

गणतन्त्र ! स्वागतं ते,
गणतन्त्र ! स्वागतं ते।
तव गौरवं पुरस्तात्,
कीर्तिं श्रियं तनोति ॥ गणतन्त्र० ॥

( २ )

राष्ट्रोद्धृतावपूर्वां
शक्तिं तनोषि नित्यम्।
त्वद्गानमेव ज्योतिः,
क्रान्तेश्च दाववह्निः[1] ॥ गण० ॥

( ३ )

संस्मृत्य गौरवं ते,
वीरा गुणानुरक्ताः।
शक्ताः स्वदेश-भक्ताः,
शूलिं मुदा श्रितास्ते ॥ गण० ॥

( ४ )

त्वं देशभक्ति-भावं
समतां क्रियाऽनुरागम्।
धर्मान्धता-विरामं
तनुषे च लोकतन्त्रम् ॥ गण० ॥

( ५ )

कार्ये प्रभाषणे च,
स्वातन्त्र्यमेव लेखे।
स्वत्वाधिकार-रक्षा
सृष्टं त्वयैव सत्यम् ॥ गण० ॥

---

१. दावाग्निः।

( ६ )

त्वां प्राप्तुमेव सत्यं
शान्तैश्च क्रान्तिशीलैः ।
आत्माहुतिः प्रदत्ता
शूलिर्वृता मुदैव ॥ गणतन्त्र० ॥

( ७ )

साम्राज्यवादिनस्ते,
त्वां वीक्ष्य भीतभीताः ।
कृत्यैर्निजैर्जघन्यैः,
भस्मान्तभावमाप्ताः ॥ गणतन्त्र० ॥

( ८ )

संपूर्ण-शक्ति-युक्तं
लब्धं तु भारतीयैः ।
गणतन्त्रमेतदेवं
क्रान्ति तनोतु लोके ॥ गणतन्त्र० ॥

( ९ )

गुण-गौरवाभिवृद्धिं,
धन-धान्य-सौख्य-वृद्धिम् ।
सद्भाव-स्नेह-वृद्धि
सिद्धि तनोतु सद्यः ॥ गणतन्त्र० ॥

( १० )

त्वद्रक्षणेऽनुरक्ताः,
भक्त्यार्पिताऽऽत्मदेहाः ।
क्रान्तेर्दवाग्नि-दूताः
कुर्वन्तु देश-स्वर्गम् ॥ गणतन्त्र० ॥

## २५. राष्ट्र-सन्देशः

( गीतिका ) ( प्रमाणिका वृत्तम् )

( १ )

विकासतां प्रकाशतां
स्वदेश एष राजताम् ।
ज्वलत्प्रताप-रोचिषा
दिगन्त-व्याप्त-कीर्तिभाक् ॥ विकासतां० ॥

( २ )

स्फुरद्-दहत्-त्विषा दहेद्,
अराति-वृन्द-वाहिनीम् ।
स्वतन्त्र-देश-भारतो
विभा-रतो विभासताम् ॥ विकासतां० ॥

( ३ )

धरा प्रपीडिता रुषा,
समस्त-आङ्ग्ल-शासकैः ।
हृता मृतेव चोज्झिता
न सान्त्वना-ध्वनिः श्रुतः ॥ विकासतां० ॥

( ४ )

विदेश-चोर-लुण्ठकैः,
चिराय तापिता मही ।
स्वदेश-वीरमात्मजं
स्व-रक्षणं प्रयाचते ॥ विकासतां० ॥

( ५ )

नहीदृशं क्वचित् सुखं
यथा स्वमातृ-तर्पणम् ।
स्वमातृभूमि-रक्षणं
स्वदेश-शक्ति-पोषणम् ॥ विकासतां० ॥

( ६ )

स्वदेश-बन्धु-पोषणं
स्व-राष्ट्र-शत्रु-शोषणम् ।
स्वमातृभूमि-तोषणं
सदा सुखं मुदावहम् ॥ विकसतां० ॥

( ७ )

यदीष्टमात्म-गौरवं
स्वदेश-मान-रक्षणम् ।
स्वदेश-केतु-सारणं
तदा भजस्व मातरम् ॥ विकासतां० ॥

( ८ )

उपास्य क्रान्ति-पद्धतिम्
अपास्य दोष-संहृतिम् ।
निरस्य दैन्य-दानवीं
सृतिं श्रयस्व मानवीम् ॥ विकासतां० ॥

( ९ )

श्रमाश्रया सृतिः शुभा
गुणावहा मतिः शुभा ।
गतिः शुभा सुखावहा
कृतिः शुभा मुदावहा ॥ विकासतां० ॥

( १० )

स्व-जीवनं समर्प्यतां
स्वमातरं च रक्ष्यताम् ।
स्व-भारतं प्रपोष्यतां
हुतात्मनश्च तोष्यताम् ॥ विकासतां० ॥

## २६. क्रान्ति-गीतम्

( गीतिका ) ( स्रग्विणी वृत्तम् )

( १ )

क्रान्तिगीतं भजध्वं भजध्वं सखे !
क्रान्तिमार्गं श्रयध्वं श्रयध्वं सखे !
क्रान्ति-गीतामृतं पीयतां पीयतां
देशहेतोर्मुदा जीवनं दीयताम् ॥क्रान्ति०॥

( २ )

पालिताः पोषिता वर्धिता लालिताः,
मातृभूम्या स्वरक्तार्चितास्तोषिताः ।
दुष्ट-दैत्यैर्हृता शोषिता पीडिता
क्लेश-घातेन दुःखेन संपीडिता ॥क्रान्ति०॥

( ३ )

धर्म एषोऽस्ति मातुः सदा रक्षणे
प्राणदानं मुदा संश्रयध्वं सखे !
पांसुभिः पूतपूतैर्विवृद्धिं गताः,
रक्षणीया सदा प्राणदानेन सा ॥क्रान्ति०॥

( ४ )

क्रान्तिवह्निः समन्ताच्चरेद् भारते
क्षोभ-दावाग्नि-दाहो दहेज्जीवनम् ।
लोभ-कामादि-कीटाणु-नाशो भवेत्
स्वार्थनाशोऽस्तु दैन्याऽऽधिनाशो भवेत् ॥क्रान्ति०॥

( ५ )

जागृतिः संचरेत्, क्रोधवह्निः सरेद्,
मातृ-दुःखाग्नि-दाहो जने संचरेत् ।
व्योममाला प्रवर्षेत् स्फुलिङ्गान् सदा
जीवने क्षोभमाला प्रवृद्धिं व्रजेत् ॥क्रान्ति०॥

( ६ )

त्रायतां त्रायतां रक्ष्यतां रक्ष्यतां
मातृभूमिर्हृता हीनवृत्तैरियम् ।
त्रास-शोकेन संतप्तगात्रा सदा
रक्षणं याचते स्व-सुपुत्रानियम् ।।क्रान्ति०।।

( ७ )

क्रान्ति-मन्त्रोदयः स्यात् समन्तात् शुभः,
क्रान्ति-दावाग्नि-दाहश्चरेज्जीवने ।
शोक-शोष-प्रणाशो न यावद् भवेद्
मातृपादेऽर्पितं स्यान्निजं जीवनम् ।।क्रान्ति०।।

( ८ )

शत्रुनाशो भवेद्, दैत्यनाशो भवेत्,
तापनाशो भवेत्, शोष-नाशो भवेत् ।
स्वार्थलिप्सा-परः कीट-मृत्युं व्रजेद्
देशद्रोही न देशेऽवशिष्टो भवेत् ।।क्रान्ति०।।

( ९ )

ये तु विश्वासघाता[1] नरा भारते
क्रान्ति-वह्नौ समे ते लयं प्राप्नुयुः ।
देशद्रोही न क्षम्यः कदाचिद् भवे
देश-विश्वास-घाती च घात्यः सदा ।।क्रान्ति०।।

( १० )

क्रान्तिगानं चरेत्, क्रान्तिगानं सरेत्,
क्रान्तिगानं लसेत्, क्रान्तिगानं फलेत् ।
क्रान्तिगानं मतं शान्ति-मूलं सदा
क्रान्तिगानं तु देशस्य सौभाग्यदम् ।।क्रान्ति०।।



---

१. विश्वासघातिनः ।

## २७. सत्याग्रहः

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

सत्याग्रह इति शस्त्रमुदारं
दीन-हीन-भय-दारकमस्त्रम् ।
देश-शत्रु-संमर्दन-युक्तिः
आङ्ग्ल-राज्य-संहारक-शक्तिः ॥ सत्या० ॥

( २ )

सत्य-निष्ठता, सत्य-श्रेष्ठता,
सत्य-प्रेष्ठता, सत्या वाणी ।
सत्य-कर्मता, सत्य-धर्मता,
सत्याग्रह इति सत्य-चित्तता ॥ सत्या० ॥

( ३ )

सत्याग्रह इति 'सत्यं' ज्योतिः,
'शिव'-मिति लोक-क्षेम-संपुष्टिः ।
'सुन्दर'-मिति जन-मानस-तुष्टिः
'सत्यं शिवं सुन्दरं' सिद्धिः ॥ सत्या० ॥

( ४ )

आत्मशक्ति-संपोषण-मन्त्रः,
ग्लानि-दोष-संशोषण-यन्त्रम् ।
शोक-शोष-परिशोषण-तन्त्रं
पराधीनता-पाश-लवित्रम्[1] ॥ सत्या० ॥

( ५ )

सत्याग्रह इति परमा शक्तिः
शौर्य-धैर्य-गुण-भक्त्यनुरक्तिः ।
पराधीनता-पाप-निवृत्तिः
स्वातन्त्र्यामृत-पान-प्रवृत्तिः ॥ सत्या० ॥

---

१. छेदकम्, छुरिका ।

( ६ )

सत्याग्रह इति परमा बुद्धिः,
गुण-गण-वृद्धिर्मानस-शुद्धिः ।
परद्रोहाद् विरतिर्गुण-रागः
सत्य-रक्षणे जीवन-त्यागः ॥ सत्या० ॥

( ७ )

सत्याग्रह इति पावन-शस्त्रम्
अरि-दल-दलन-सुदर्शन-चक्रम् ।
जीवन-ज्योतिः, शुचिता-तन्त्रं
देश-समृद्धि-शान्ति-सुख-मन्त्रम् ॥ सत्या० ॥

( ८ )

सत्याग्रह इति वीर-विभूतिः,
धीर-शूर-जन-रक्षक-हेतिः ।
त्याग-तपोबल-गौरव-भूतिः,
मानसशक्ति-मान-धन-सूतिः ॥ सत्या० ॥

( ९ )

सत्याग्रह इति शक्ति-संग्रहः,
रोष-दोष-मद-मोह-निग्रहः ।
भारतभूमि-पाश-भय-नाशः,
स्वातन्त्र्यामृत-विरचित-हासः ॥ सत्या० ॥

( १० )

सत्ये सुखदः सदा आग्रहः,
गांधि-वर्णितो दैन्य-निग्रहः ।
भारत-शक्तिः, भारत-शस्त्रं,
शत्रु-सैन्य-दल-नाशकमस्त्रम् ॥ सत्या० ॥

●

## २८. सर्वोदयः

( उपजातिर्वृत्तम् )

( १ )

सर्वोदयो लोक-विकास-हेतुः
सर्वोदयः शान्ति-प्रसार-केतुः ।
सर्वोदयो गांधि-विचार-मूर्तिः
सर्वोदयो विश्व-सुख-प्रसूतिः ॥

( २ )

सर्वोदयो मानव-सौख्य-सूत्रं
सर्वोदयः शान्ति-ममत्व-मन्त्रः ।
सर्वोदयः क्रान्ति-सुधार-यन्त्रं
सर्वोदयो व्यष्टि-समष्टि-तन्त्रम्[1] ॥

( ३ )

सर्वे सदा सन्तु सुखैः प्रहृष्टाः,
रोगैर्वियुक्ता भय-शोक-मुक्ताः ।
शान्तेः सुधा-पान-प्रसन्न-चित्ताः,
दुःखैर्विमुक्ता धन-धान्य-युक्ताः ॥

( ४ )

न शोषणं स्यात् पतिताऽऽर्त-नृणां
न पोषणं स्याज्जन-शोषकाणाम् ।
न वर्ग-संघर्ष-सृतिः श्रिता स्यात्
न धर्म-जात्यादि-विभेद-भावः ॥

( ५ )

न साम्यवादो जनता-हिताय
न भूतिवादो[2] भव-वैभवाय ।
शान्त्याश्रया लोक-सुखैक-दृष्टिः
सृतिः समेषां सुख-शान्ति-हेतुः ॥

---

१. व्यक्ति-समाज-समन्वय-मूलकम् ।　२. पूंजीवाद इति ।

( ६ )

न ह्यत्र जात्यादि-विभेद-भावो
न वर्णभेदो न च वर्ग-भेदः ।
अस्पृश्यता नात्र न चोच्च-नीचः
सर्वे समानाः परमेश-पुत्राः ॥

( ७ )

सार्वाङ्गिको ह्यत्र विकास-भावः
समाज-शुद्धिर्जनता-विशुद्धिः ।
शान्तिर्व्यवस्था ह्यनुशासनं च
देशे विदेशे सकले समाजे ॥

( ८ )

आध्यात्मिकं मूल्यमिहास्ति मुख्यं
श्रमो वचो वा कृतिरस्ति तुल्या ।
न वृत्ति-भेदाश्रय उच्च-नीचः
सर्वाऽपि वृत्तिः सममेव मान्या ॥

( ९ )

व्यष्टेर्हितं चास्ति समष्टि-निष्ठं
श्रमः प्रधानः श्रमजो विकासः ।
श्रमाऽऽश्रया वृत्तिरुदीर्ण-भावा
श्रमाऽऽश्रया देश-समाज-वृद्धिः ॥

( १० )

संत्यज्य हिंसां पर-शोषणानृतम्
अहिंसया सत्य-समाज-पुष्टिः ।
समत्व-भावो वसुधा-कुटुम्बकं
सर्वोदयस्यास्ति मतं पवित्रम् ॥

*

## २९. वसुधैव कुटुम्बकम्

( गीतिका ) ( स्रग्विणी वृत्तम् )

( १ )

विश्वबन्धुत्व-मन्त्रं सदा गीयतां
विश्व-कल्याण-भावं सदा धीयताम् ।
लोक-कल्याण-भावामृतं पीयतां
लोक-शोकाऽऽधि-तापावलिः क्षीयताम् ॥ विश्व० ॥

( २ )

स्वार्थमूलं मतं दीन-संतापनं
शोक-मोहादि-मूलं मतं नाशनम् ।
स्वार्थ एवास्ति लोकस्य संशोषकः,
क्लेश-हेतुः सदा शान्ति-संरोधकः ॥ विश्व० ॥

( ३ )

द्वेष-बुद्धिः सदा ताप-संचारिणी
स्वार्थबुद्धिः सदा शान्ति-संहारिणी ।
भेद-बुद्धिः सदा स्नेह-संवारिणी
लोभ-बुद्धिः सदा दुःख-संसारिणी ॥ विश्व० ॥

( ४ )

विश्वशान्तेः समस्याऽस्ति घोराऽधुना,
राष्ट्रसंघः समाधातुकामः सदा ।
विश्वशान्तिं विना नास्ति लोके सुखं
नैव दुःखाऽऽधि-व्याधेश्च संहारणम् ॥ विश्व० ॥

( ५ )

रागद्वेषावविश्वास-भावोदयो
देश-संशोषणं राष्ट्र-संहारणम् ।
स्वार्थसिद्धयै परस्यापि संशोषणं
विश्वशान्तेस्तु संस्थापने रोधकम् ॥ विश्व० ॥

( ६ )

विश्वबन्धुत्व-भावोदयः सौख्यदः,
विश्व-कल्याण-भावः सदा मोददः ।
विश्वबन्धुत्व-भावेन शान्तेः सुधा
भ्रातृभावोदयः स्नेह-भावोद्गमः ॥ विश्व० ॥

( ७ )

प्रेममूलाः सदा संपदः सौख्यदाः,
द्वेषमूलाः सदैवाऽऽपदो दुःखदाः ।
द्वेषनाशो नृणां सौख्य-संचारकः,
शान्ति-संस्थापको राष्ट्र-क्षेमावहः ॥ विश्व० ॥

( ८ )

वेद-शास्त्रेषु बन्धुत्व-भावोद्गमः,
सर्वधर्मेषु बन्धुत्व-भावाऽऽश्रयः ।
सार्वभौमा यमाः[1] शान्ति-संस्थापकाः,
स्नेहदाः सौख्यदा भ्रातृभावोदयाः ॥ विश्व० ॥

( ९ )

यत्र जागर्ति बन्धुत्व-भावावलिः,
स्नेह-भावोदयो दीन-संरक्षणम् ।
ताप-नाशः क्षुधादेश्च संवारणं
तत्र शान्तिर्व्यवस्थोन्नतिः संपदः ॥ विश्व० ॥

( १० )

विश्वबन्धुत्व-मन्त्रः सदा श्रेयसे
विश्वबन्धुत्व-शक्तिः सदा प्रेयसे ।
विश्वशान्त्यै समृद्ध्यै सदा संपदे
विश्वबन्धुत्व-भावोद्गतिः संमुदे ॥ विश्व० ॥



१. अहिंसा-सत्यास्तेय-ब्रह्मचर्यापरिग्रहा यमाः ।

## ३०. हुतात्मानः

( उपजातिर्वृत्तम् )

( १ )

गायन्तु लोका बलिदान-गानं
गायन्तु क्रान्तेश्चरितं पवित्रम् ।
हुतात्मनां कीर्ति-सुधां पवित्रां
निपीय देशव्रतमाश्रयन्तु ॥

( २ )

न व्यर्थमेयाद् बलिदान-रक्तं
नाऽऽत्माहुतेः क्रान्तिफलं विनश्येत् ।
क्रान्तेः सुवृक्षः सुषमा-समृद्धः
पुष्पैः फलैः पुष्टिमियादजस्रम् ॥

( ३ )

हुतात्मनां पावनमत्र वृत्तं
सुधा-रसं जीवन-ज्योतिरेव ।
देशाभिमानं निज-देश-कीर्ति
स्वातन्त्र्य-भावं प्रथयत्यजस्रम् ॥

( ४ )

हुतात्मनां यत्र वृता सपर्या[1],
गुणार्चनं कीर्तनमेव नित्यम् ।
तत्रैव शान्तिः सुख-वृद्धिरिष्टा
देशोन्नतिर्गौरव-मान-वृद्धिः ॥

( ५ )

यस्मिंस्तु देशे बलिदान-भावो
व्याप्तः समाजे युव-नेतृ-वर्गे ।
तत्रैव कीर्तिनिज-देश-वृद्धिः,
आत्माभिमानं गुण-गौरवर्द्धिः ॥

---

१. पूजा ।

( ६ )

हुतात्म-वृत्तं ज्वलितो दवाग्निः,
हुतात्म-वृत्तं परमं च ज्योतिः ।
हुतात्म-वृत्तं जनता-प्रबोधः,
हुतात्म-वृत्तं निज-देश-कीर्तिः ॥

( ७ )

यदा यदा देश-समृद्धि-नाशः,
स्वातन्त्र्य-नाशो जन-शोषणं च ।
तदा तदा देश-स्वतन्त्रतार्थं
हुतात्मनामत्र शुभोऽवतारः ॥

( ८ )

हुतात्म-ज्योतिर्जन-शक्ति-दातृ
हुतात्म-ज्योत्स्ना भय-ताप-मुक्तिः ।
हुतात्म-शक्तिर्निज-देश-शक्तिः
हुतात्म-भक्तिर्निज-देश-भक्तिः ॥

( ९ )

ये शूरवीरा बलिदान-भावाः,
देशार्थ-संत्यक्त-समस्त-वित्ताः ।
त एव देशोद्धरणे प्रवृत्ताः,
मातुर्भुवः क्लेश-तर्ति हरन्ति ॥

( १० )

ते क्रान्ति-निष्ठा जनताऽभिनन्द्याः,
देशार्पिता देश-समाज-वन्द्याः ।
देशस्य स्वातन्त्र्य-दवाग्नि-दग्धाः,
त एव वीरा अमराः सुराश्च ॥

## ३१. राष्ट्र-प्रहरी

( गीतिका ) ( भुजंगप्रयातंवृत्तम् )

( १ )

अये राष्ट्रयोधाः ! अये वीरवर्याः !
अये छात्र-संघर्ष-सेनाऽधिनाथाः ।
सदा सावधानाः सदा दत्तचित्ताः
स्वदेशस्य रक्षा-कृतौ जागरूकाः ॥ अये० ॥

( २ )

इमे स्वार्थलीना नरा वित्तलुब्धाः,
निजां स्वार्थसिद्धिं वरं मन्यमानाः ।
जनानां सदा शोषणे लीनचित्ताः,
नराः पामरास्ते सदा ताडनीयाः ॥ अये० ॥

( ३ )

धनं देशहेतोर्न स्वार्थस्य सिद्ध्यै
तनुर्देशहेतोर्न भोगोपभुक्त्यै ।
कृतिर्देशहेतोर्न त्रासस्य वृद्ध्यै
मनो देश-चिन्ता-निमग्नं न स्वैरम् ॥ अये० ॥

( ४ )

इमे पापलीनाश्चरित्रेण हीनाः,
सदोत्कोचजीवा[1] मुधाऽऽहिण्डमानाः[2] ।
धनैर्वा जनैर्वा स्व-स्वार्थावसक्ताः,
क्रुधा ताडनीया बहिष्कार-योग्याः ॥ अये० ॥

( ५ )

युवा नेतृवर्गोऽथवा मन्त्रिवर्यो
यदा स्वार्थमग्नश्चरित्रेण हीनः ।
स्वदेशस्य द्रोही नरो दैत्यरूपः
स दण्ड्यः स वध्यः स न्यक्कारपात्रम्[3] ॥ अये० ॥

---

१. अन्यायोपार्जित-धन-जीविनः । २. भ्राम्यन्तः । ३. तिरस्कारयोग्यः ।

( ६ )

न यत्रास्ति देशे विधानं सुपुष्टं
न वा न्याय-दण्ड-व्यवस्था सुपुष्टा ।
न चैवाऽनुशिष्टिः[१] समाजे प्रदेशे
न देशो विकासोन्नतिं कर्तुमर्हः ॥ अये० ॥

( ७ )

सदा देशभक्तैः सदा जागरूकैः,
स्वकर्म-प्रवृत्तैः स्वधर्मैक-निष्ठैः ।
सदा सत्यनिष्ठैः स्वदेहार्पणैस्तु,
स्वदेशोन्नतिः शक्यते कर्तुमिष्टा ॥ अये० ॥

( ८ )

नरा जातिवादेऽथवा धर्मवादे,
श्रिताः सम्यवादेऽथवा भूतिवादे ।
कुटुम्बाश्रया[२] हीनवृत्तापचाराः,
इमे देश-द्रुग्धाः सदा दण्डनीयाः ॥ अये० ॥

( ९ )

इमे हीनवृत्ताः सदा कर्मचोराः,
स्व-जात्यादिवादैर्विवादैक-निष्ठाः ।
धनस्यैव गृध्राः कुकृत्याऽऽप्तवित्ताः,
सदा शासनेन क्रुधा नाशनीयाः ॥ अये० ॥

( १० )

अये कर्मवीराः ! स्वकर्मैक-निष्ठाः,
सदा राष्ट्र-रक्षापरा जागरूकाः ।
भयं देशजं पारदेश्यं कुतो वा
समग्रं समाप्यं स्वदेहार्पणेन ॥ अये० ॥



१. अनुशासनम् । २. स्व-कुटुम्बोन्नति-वादिनः ।

## ३२. दलितोद्धारः

( भुजंगप्रयातं वृत्तम् )

( १ )

इमे बान्धवा भ्रातरः प्रेमपात्रं
कृशा हीनवित्ताः क्षुधा हीनवृत्ताः।
सदा शोक-ग्रस्ताः सदा दैन्य-त्रस्ताः
सदैवाऽऽर्यजातेस्त्विमे रत्नभूताः ॥

( २ )

इमे जाति-भेदेन वर्ग-प्रभेदैः,
सदा पीड्यमानाः सदा शोष्यमाणाः।
सदोच्चावचैर्भेदभावैर्विनष्टाः,
इमे पोषणीया इमे तोषणीयाः ॥

( ३ )

इयं हिन्दु-जातिः प्रणष्टा प्रभेदैः,
सदा भेदभावैः स्वयं कृश्यमाना।
न देशस्य जातेस्तु चिन्ता कदाचित्
सवर्णाऽसवर्णेषु नाऽभेद-बुद्धिः ॥

( ४ )

इयं द्वेष-बुद्धिः, इयं भेद-बुद्धिः,
इयं स्पृश्यताऽस्पृश्यतायाश्च बुद्धिः।
इयं चोच्च-नीचाऽऽश्रया हीनवृत्तिः
सदा हिन्दुजातेस्तु संहारकर्त्री ॥

( ५ )

दयानन्दवर्यो मुदा दीन-त्राता,
सदा हिन्दुजातेश्च प्राण-स्वरूपः।
विजातीय-लोकैर्हृतान् वीक्ष्य चैतान्
शुचाऽऽक्रान्त-चित्तो न लेभे तु शान्तिम् ॥

( ६ )

सदा हिन्दुजातेस्तु क्षीणामवस्थां
निरीक्ष्याऽवदद् धर्म-जातेरधीशान् ।
इयं भेद-बुद्धिः कुठारावघातः
स्वपादे, कदाचिद् धिया चिन्तनीयम् ॥

( ७ )

न चैते विमूढास्तु जातेरधीशाः
सदा जाति-वादान्ध-प्रज्ञा-विवेकाः ।
न जातेर्हितं जातु ते कामयन्ते
स्वधर्मस्य हानिं न ते चिन्तयन्ति ॥

( ८ )

सुधीर्गान्धिवर्योऽपि हीनामवस्थां
निरीक्ष्यावदद् धर्म-धी-हीन-चित्तान् ।
इमे भ्रातरो रत्नभूताश्च जातेः
समानाधिकारेण संरक्षणीयाः ॥

( ९ )

विधर्मं गतास्ते शुचः कारणानि,
सृतिं यावनीमाङ्गलीं वा श्रयन्ते ।
विधर्मं श्रिता लोभ-मोहादि-हेतोः,
त एवाऽऽर्य-जातिं क्रुधा नाशयन्ति ॥

( १० )

अये ! आर्य-जातेर्युवानो बुधाश्च
हितं वाक्यमेतत् तु शृण्वन्तु स्निग्धाः ।
इमे शिल्पिनः कर्मिणः शूद्रप्रख्याः,
सदा पोषणीयाः सदा तोषणीयाः ॥

## ३३. श्रमदानम्

( गीतिका ) ( भुजंगप्रयातं वृत्तम् )

( १ )

श्रमः सौख्यमूलं श्रमः शान्तिमूलं
श्रमो दैन्यहर्ता श्रमो व्याधि-हन्ता ।
श्रमः साधनं भुक्ति-मुक्तेरजस्रं
श्रमो मानवानां चरित्रं पवित्रम् ॥

( २ )

श्रमो राजते यत्र ज्योतिःस्वरूपः,
श्रमो भासते यत्र वह्नि-प्रकाशः ।
श्रमो द्योतते यत्र भानु-प्रतापो
न तत्रास्ति दैन्यं न वा रोग-शोकः ॥

( ३ )

सुधादीधितिः प्राणिनां ताप-हर्ता
खरांशु-प्रभश्चित्त-चैतन्य-दाता ।
कुबेरः श्रियः, शक्ररूपश्च शक्तेः
श्रमः सर्व-दुःखाऽऽधि-नाशैक-हेतुः ॥

( ४ )

श्रमस्यैव दानेन नित्यं विकासो
विलासः प्रहासः सुवासः प्रकाशः ।
विनोबो[१]-पदिष्टं श्रियो मूलमेतत्
स्वदेशोन्नतेर्मूलमेतत् प्रकृष्टम् ॥

( ५ )

श्रमस्यैव दानेन कूपाः सरण्यः
शुभा ग्राममार्गा घना वाटिकाश्च ।
प्रकाश-प्रबन्धः, पुरे स्वच्छता सा
वनालिः प्रणालिः[२] शिवाः सेचनार्थाः ॥

---

१. आचार्य-विनोबाभावे । २. नालिका-निर्माणम् ।

( ६ )

श्रमस्यैव दानेन स्वार्थाऽवरोधः
परार्थार्पणं त्याग-भावोदयश्च ।
सहास्तित्व-भावाभिवृद्धिः प्रमोदः
क्रियाशीलकत्वं जनाऽऽह्लादकत्वम् ॥

( ७ )

श्रमस्यैव दानेन ग्रामोन्नतिः स्यात्
पुराणां विकासो नराणां प्रहासः ।
वनानां विवृद्धिः, जलानां सुयोगः
सदैवाऽऽर्थिकी उन्नतिर्वृद्धिरिष्टा ॥

( ८ )

श्रमस्यैव दानं शुभः सौख्य-मार्गः
सदा भ्रातृ-भावोदयस्यास्ति मूलम् ।
शुभा विश्व-बन्धुत्व-भावाभिवृद्धिः
सदैवोन्नतिर्मानसी दैहिकी च ॥

( ९ )

पुरेयं सहास्तित्व-भावाऽभिसक्तिः
सदा संस्थिता भारते बद्धमूला ।
श्रमो वा धनं वा निजं देहमेव
स्वभूतिः परार्थोपयोगाय दत्ता ॥

( १० )

यदीष्टा हृदा भारतस्याऽभिवृद्धिः
विकासः प्रसादोऽथवा सौख्य-सिद्धिः ।
श्रमस्यैव दानेन साध्यं समस्तं
श्रमो मूलमन्त्रः सुखस्योन्नतेश्च ॥

●

## ३४. रक्तदानम्

( भुजंगप्रयातं वृत्तम् )

( १ )

इदं भारतं याचते रक्तदानं
धरेयं सदा भिक्षते देहदानम् ।
सदा पीडिता शोषिता भारती भूः
सदा तप्तगात्रा शुचा क्षीणकान्तिः ॥

( २ )

सुता येऽधुना स्वार्थ-संमुग्ध-चित्ताः,
धनैर्गर्हितैर्गौरवं कामयन्ते ।
निज-स्वार्थ-लिप्ता धनैकाश्रयास्ते
न मातुः शुचं चेतसा चिन्तयन्ति ॥

( ३ )

न नीचैः खलैरेभिरेषा धरित्री
शुचाऽऽक्रान्त-चित्ताऽवमोक्तुं तु शक्या ।
इयं धीर-धुर्यैर्मुदा देहत्यागैः
स्व-रक्त-प्रदानैः सदा सान्त्वनीया ॥

( ४ )

इयं शोषिताऽऽङ्ग्लैः सदा क्रूरधीभिः,
इयं पीडिता पामरैर्यावनैश्च ।
इयं शोष्यते भूतिवादैरजस्रं
सदा धर्महीनैः सदा क्रूरकृत्यैः ॥

( ५ )

धरेयं विनष्टा प्रतप्ता कुपुत्रैः
खलैर्धर्महीनैः सदा स्वार्थपूरैः ।
न ते मातृभूमेः शुचं चिन्तयन्ति
नराः पामरास्ते सदा गर्हणीयाः ॥

( ६ )

न तेष्वस्ति देशोन्नतेः काचिदाशा
न देशाभिमानं न वा देशभक्तिः ।
सदा शोषणे दत्तचित्ताः समे ते
नराणां भवेयुः सदा कोपभाजः ॥

( ७ )

स्वदेशे विदेशे च ये देशभक्ताः,
नरैस्तर्पिता तैर्धरा रक्तदानैः ।
बलिस्तादृशां कीर्तिभाजां धरित्रीं
सदा सौख्ययुक्तां सुपुष्टां विधत्ते ॥

( ८ )

अये भारतीया निजं कर्मजातं
हृदा चिन्तयध्वं तथा च कुरुध्वम् ।
इयं मातृभूः शोक-सन्ताप-ग्रस्ता
सदा याचते तेऽवधानं समग्रम् ॥

( ९ )

मुदा रक्तदानं मुदा वित्तदानं
मुदा भूमिदानं मुदा स्वार्थ-दानम् ।
मुदा आत्मत्यागो मुदा देहत्यागः
स्वमातुर्हितायेप्सितं सौख्यसिद्ध्यै ॥

( १० )

विना रक्तदानं न संभाव्यते श्रीः,
न वा शोकनाशो न दुःखाऽऽधि-नाशः ।
सदा रक्तदानाऽऽश्रया श्रीः समृद्धिः
गुणानां विवृद्धिः सुखानां च सिद्धिः ॥

## ३५. दयानन्द-स्तवः

( गीतिका ) ( प्रमाणिका वृत्तम् )

( १ )

नमामि मूलशंकरं
दयाऽऽकरं गुणाऽऽकरम् ।
प्रभाऽऽकरं सुधाऽऽकरं
समस्त-लोक-भास्करम् ॥ नमामि० ॥

( २ )

स्व-ज्ञान-दीप्ति-भास्वरं
गुण-प्रभा-विकस्वरम् ।
स्व-योग-रोचिषाऽऽवृतं
तपो-विधूत-कल्मषम् ॥ नमामि० ॥

( ३ )

महर्षि-वृन्द-वन्दितं
श्रुतेर्निनाद-नन्दितम् ।
अनाथ-नाथमाश्रयं
सदा सदार्य-संश्रयम् ॥ नमामि० ॥

( ४ )

भजे गुणैक-मानिनं
श्रुति-प्रभैक-ध्यायिनम् ।
भवाऽब्धि-दोष-पायिनं
सुखौघ-शान्ति-दायिनम् ॥ नमामि० ॥

( ५ )

तमोऽपहं रजोऽपहम्
अजस्रमात्म-दोष-हम् ।
तपः-प्रपूत-मानसम्
अनार्य-वृन्द-शासनम्[1] ॥ नमामि० ॥

---

१. नाशकम् ।

( ६ )

श्रये गुणोच्चयाऽऽश्रयं
मनोज्ञ-भाव-संश्रयम् ।
भवाऽब्धि-दुःख-वारकम्
अशेष-दोष-हारकम् ॥ नमामि० ॥

( ७ )

श्रुति-स्मृति-प्रचारकं
सदाऽऽर्य-वर्त्म-धारकम् ।
दरिद्र-दीन-तारकं
गुण-प्रभा-प्रसारकम् ॥ नमामि० ॥

( ८ )

त्वदङ्घ्रि-पद्म-सेवनं
समस्त-शोक-शोषणम् ।
अशेष-दोष-दूषणं
सुखौघ-सिन्धु-पोषणम् ॥ नमामि० ॥

( ९ )

गुणाऽऽश्रयं प्रभाऽऽश्रयं
समस्त-गौरवाऽऽश्रयम् ।
परार्थ-त्यक्त-विग्रहं[1]
त्विषा-प्रदीप्त-विग्रहम् ॥ नमामि० ॥

( १० )

नमामि लोक-लोचनं
स्फुरत्प्रभा-प्ररोचनम् ।
सुधी-प्रवीर-रञ्जकं
समस्त-दोष-भञ्जकम् ॥ नमामि० ॥

●

---

१. शरीरम् ।

## ३६. दयानन्दः स्वामी जयति भुवने भास्कररुचिः

( शिखरिणी वृत्तम् )

( १ )

गुणानामाधारो विदित-श्रुति-शास्त्रार्थ-निचयः,
समुद्धर्ता भर्ता पतित-जन-चित्ताऽऽर्ति-हरणः ।
श्रयन्नात्मोत्सर्गं पर-हित-रतः स्वार्थ-विरतो
दयानन्दः स्वामी जयति भुवने भास्कर-रुचिः ॥

( २ )

'दयाया आनन्दो' विलसति गुणानां समुदयः,
'ऋषि'-र्वेदार्थानां गहन-मननावाप्त-शुभ-धीः ।
श्रुतीनां राद्धान्तान् विशदयति वेदार्थ-विवृतौ,
सरस्वत्याः स्रोतो जयति यतिवर्यो गुणनिधिः ॥

( ३ )

अनाथानां नाथः शरणमबलानां गुणि-गुरुः,
विनेता भीतानां सुपथमुपनेता च सुधियाम् ।
शरण्यो दीनानां गुणि-गण-वरेण्यः श्रुति-मतिः,
दयानन्दो योगी जयति भुवने भास्कर-रुचिः ॥

( ४ )

प्रणेता भाष्याणां श्रुति-गदित-तत्त्वार्थ-निलयो
यतिः सत्यार्थं यः प्रकटयति 'सत्यार्थ०'-सुकृतौ ।
श्रुतीनां तत्त्वार्थं विशदयति 'ऋग्भाष्य'-विवृतौ
दयानन्दो वाग्मी जयति भुवने भास्कर-रुचिः ॥

( ५ )

ऋषीणां प्रत्नां यः सरणिमनुसृत्याऽऽशु विदधे
श्रुतीनां शिक्षार्थं गुरुकुल-ततिं ज्ञान-रुचिराम् ।
विरुद्धं वेदानां तदिदमिह हेयं सुपथगैः,
दयानन्दो दान्तो जयति भुवने भास्कर-रुचिः ॥

( ६ )

जगन्नेता धीरः सकल-गुण-राशिर्बुध-सुहृद्,
नदीष्णो वेदानां जनहित-कृत-स्वार्थ-विरहः।
अविद्याया ध्वान्तं व्यगमयदिहाऽध्यात्म-सुदृशा
मुनीन्द्रो व्यारेजे सकल-सुख-सौभाग्य-सरणिः॥

( ७ )

समाजं त्वार्याणां प्रति-नगरमस्थापयदिह,
समुन्मूल्याऽऽमूलं श्रुति-विपथ-पाखण्ड-निचयम्।
सदादर्शं प्राच्यं भुवि विनिदधे शान्ति-सुखदं
दयानन्दो धीरो जयति भुवने भास्कर-रुचिः॥

( ८ )

गवां रक्षा कार्या, पदमनुविधेयं च सुधियां,
गुणा ग्राह्या हेयाः सततमशिवा दोष-निकराः।
सदाऽऽर्याणां भाषा प्रचरतु भवे भव्य-गुण-धा,
य एवं व्याचख्यौ जयति स यतिर्भास्कर-विभः॥

( ९ )

जने ह्यस्पृश्यत्वं नहि श्रुति-मतं नापि हित-कृद्,
विजातेर्जातिश्च बहुविध-विभागो नहि हितः।
विदेशीयं राज्यं नहि मतिमतां मान-गुण-दं,
मनोज्ञं स्वातन्त्र्यं निज-बलि-कृतेनापि सुखदम्॥

( १० )

सुशिक्षां नारीणां, विविध-मत-शुद्धिं प्रचलयन्,
पदाऽऽक्रान्त-त्राणं विदधदनिशं जीवन-पणैः।
'समं लोकं चाऽऽर्यं कुरुत' इति लोकानुपदिशन्,
दिवं यातो जीवत्यमर इव वन्द्यो यतिवरः॥

## ३७. दयानन्दवीरो यतिर्भातु शश्वत्

( गीतिका ) ( भुजंगप्रयातम् )

( १ )

दयानन्दवीरो यतिर्भातु शश्वद्
गुणानां निधिर्वेद-शास्त्रोपदेष्टा।
सदा संयमे रक्तधीर्धीर-चेताः
वरेण्यः शरण्यो मुनिः साधुवृत्तः ॥ दयानन्द० ॥

( २ )

सदा देशभक्तः सदा धर्मभक्तः
सदा दीन-हीनाऽऽर्ति-नाशानुरक्तः।
स्वदेशव्रतो देशभक्त्येक-मूर्तिः
स्वदेशाभिमानेन संदीप्तमूर्तिः ॥ दयानन्द० ॥

( ३ )

सदा देशचिन्ता, सदाऽनाथ-चिन्ता
दरिद्रातुराणां समुद्धार-चिन्ता।
गवां योषितां दुःख-नाशस्य चिन्ता
सदा यस्य चित्ते स देवो वदान्यः ॥ दयानन्द० ॥

( ४ )

न यस्यास्ति चित्ते भयानां विभीतिः
न रोषाग्नि-दाहो न वा शोक-शोषः[१]।
न यत्रास्ति चिन्ता स्वदेहस्य जातु
सदा देशचिन्ता-निमग्नः स धन्यः ॥ दयानन्द० ॥

( ५ )

ऋषीणां मुनीनां सदाऽऽदर्श-पाता
स्ववित्तस्य दाता, स्वदेहस्य दाता।
सदा मातृभूमेः सुरक्षाऽनुरक्तो
विदेशीय-धर्मे प्रहारानुरक्तः ॥ दयानन्द० ॥

---

१. शोकेन शोषणम्।

( ६ )

सदैवाऽऽङ्ग्लभाषां सृतिं[1] खण्डयन् सः,
सदा भारतीयं मतं मण्डयन् सः।
चरित्राभिमानं सदा दर्शयन् सः
स्वदेशानुरागे रतो धर्म-धुर्यः ॥ दयानन्द० ॥

( ७ )

स्वदेशीय-राज्यं मतं सर्वश्रेष्ठं
विदेशीय-राज्यं सदाऽनर्थकारि।
स्वदेशीय-राज्ये सुखं शान्तिरिष्टा
सदा स्वाभिमानं विकासोन्नती च ॥ दयानन्द० ॥

( ८ )

कुरीतिः सदा दुःखद्वन्द्वादि-कर्त्री
कुनीतिः[2] सदा मानवाऽऽचार-हर्त्री।
सदैवाऽन्धविश्वास-मूला अनर्थाः
वदन् देशहेतोः पपौ यो विषं च ॥ दयानन्द० ॥

( ९ )

सदा योषितां मान-रक्षाऽवसक्तः
सदा देश-स्वातन्त्र्य-कार्यानुरक्तः।
सदा आर्य-धर्म-प्रचारानुरागी
विरागी व्रती विश्वबन्धुत्व-मानी ॥ दयानन्द० ॥

( १० )

मुदा दुःखजातं[3] प्रसेहे परार्थं
जहौ देशहेतोः सुखं चार्थजातम्।
सदा क्रान्ति-सन्देशदं तं नतोऽहं
सदा मातृभू-दत्त-चित्तं श्रितोऽहम् ॥दयानन्द० ॥



१. आङ्ग्ल-भाषाम् आङ्ग्ल-पद्धतिं च। २. अनीतिः, दुर्नीतिर्वा।
३. दुःखसमूहम्।

## ३८. विलसतु गांधिर्गुणधिरजस्रम्

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

विलसतु गांधिर्गुणधिरजस्रं
विलसतु बापूः सुकृत-सुराशिः ।
विलसतु गांधेर्गुण-गण-राशिः
विकसतु भारत-भाग्य-सरोजम् ॥ विलसतु० ॥

( २ )

सत्य-अहिंसा-व्रत-धृत-देहं
दीन-हीन-पतितार्पित-गेहम् ।
जन-हित-धृत-निज-गौरव-स्नेहं
नमत सखे ! तं गुणधिमजस्रम् ॥ विलसतु० ॥

( ३ )

देशभक्ति-भरितामृत-सिन्धुं
पतित-हीन-जनतैक-सुबन्धुम् ।
राग-द्वेष-भय-मुक्तमनघं
नतिरियमस्तु सदा गुणराशिम् ॥ विलसतु० ॥

( ४ )

त्याग-तपो-धृति-संयम-राशिः
मान-दान-गुण-गौरव-कोशः ।
धर्म-नीति-गुण-मिश्रण-दक्षः
देश-सुरक्षा-धृत-वर-पक्षः ॥ विलसतु० ॥

( ५ )

भ्रातृभाव-समतैक-निदेष्टा
जाति-वर्ग-कृत-द्वेष-निरोद्धा ।
सत्याग्रह-रुचिरशुचि-विरोद्धा
जयतु महात्मा गांधिरजस्रम् ॥ विलसतु० ॥

( ६ )

मौलिक-शिक्षा-पद्धति[1]-स्रष्टा
सूत्र-हेतु-निज-चक्र[2]-प्रयोक्ता ।
आर्थिक-प्रगति-समुन्नति-द्रष्टा
स्त्रीजन-वटुजन-ताप-निरोद्धा ॥ विलसतु० ॥

( ७ )

शान्ति-सुधा-रस-पान-मनोज्ञः
क्रान्तिकरो जन-मानस-विज्ञः ।
जीवन-द्रष्टा भारत-स्रष्टा
'राष्ट्रपिता' भरतावनि-पाता ॥ विलसतु० ॥

( ८ )

समता-ममता-धृत-वर-शस्त्रः
सत्य-पूत-निज-संयम-शक्तः ।
देशज-वस्तु-प्रयोग-निदेष्टा
धार्मिकभेद-निवारण-दक्षः ॥ विलसतु० ॥

( ९ )

आङ्ग्ल-सभ्यता-संस्कृति-रोद्धा
भारत-संस्कृति-नीति-प्रयोक्ता ।
चारित्रिक-गुण-वृद्धि-नियोक्ता
देशभक्ति-व्रत-जीवन-दाता ॥ विलसतु० ॥

( १० )

वाचा मनसा क्रियया पूतः
सत्य-स्नेह-करुणा-रस-सिक्तः ।
भारतमाता तव जनि-तुष्टा
तव गुण-चरितामृत-संपुष्टा ॥ विलसतु० ॥



---

१. बेसिक-शिक्षा-पद्धतिः, २. 'चरखा' इति ।

## ३९. जयतु सुभाषः

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

जयतु सुभाषो गुणि-गण-हासो
रिपु-जन-त्रासो भुवन-विलासः ।
देश-भक्ति-गुण-गौरव-दीप्तो
भारत-मातृ-दुःख-संतप्तः ॥ जयतु० ॥

( २ )

आत्मत्याग-रुचिरशुचि-विरोद्धा
आङ्ग्ल-शत्रु-संत्रासक-योद्धा ।
कुनय-प्रदर्शन-शोषण-रोद्धा
मातृभूमि-सन्ताप-निरोद्धा ॥ जयतु० ॥

( ३ )

त्याग-तपोबल-गौरव-पूर्णः
क्रान्ति-शौर्य-बल-गति-रय-तूर्णः[१] ।
स्वाभिमान-ममता-गुण-पूर्णः
कृत-रिपु-दलन-मान-मद-चूर्णः ॥ जयतु० ॥

( ४ )

भारत-दुःख-ताप-संतप्तो
दीन-हीन-जनताऽऽर्ति-प्रतप्तः ।
वैदेशिक-शासन-संतप्तः
आत्माहुति-रतिरति-संदीप्तः ॥ जयतु० ॥

( ५ )

क्रान्तिदूत-गरिमाऽमृत-शौण्डः[२]
शत्रु-सैन्य-संमर्दन-चण्डः ।
दुष्ट-दृप्त-जन-धृत-खर-दण्डः
मातृभूमि-वरदात्मज-चण्डः[३] ॥ जयतु० ॥

---

१. त्वरितगतिः, २. उद्वेल्लितः, उत्तेजितः, मत्तः । ३. वरद-पुत्र-श्रेष्ठः ।

( ६ )

हिन्द-सैन्य[१]-संस्थापन-शक्तः,
अनुपम-धीर-कृतावनुरक्तः ।
जन-संग्रह-संघर्ष-सुदक्षः,
धृत-चितरंजनदास-सुपक्षः ॥ जयतु० ॥

( ७ )

सदा लोकप्रिय-भारत-नेता
'नेताजी'-प्रिय-पदवी-जेता ।
अग्रगामि-दल[२]-स्थापन-कर्ता
भारत-वसुधोत्पीडन-हर्ता ॥ जयतु० ॥

( ८ )

आङ्ग्ल-राज्य-संहार-प्रकेतुः,
भारत-गौरव-रक्षण-हेतुः ।
श्रम-दम-त्याग-तपोबल-युक्तः,
दैन्य-त्रास-भय-संशय-मुक्तः ॥ जयतु० ॥

( ९ )

'जय हिन्दे'-ति[३] घोष-संजुष्टः,
सेनापतिरति-गुण-गण-पुष्टः ।
भारत-जननी-शोषण-हर्ता
मातृभूमि-परिपोषण-कर्ता ॥ जयतु० ॥

( १० )

सिंहशक्तिरयममृत-ज्योतिः,
देशोद्धृति-हित-धृत-खर-हेतिः[४] ।
ज्ञानपुञ्ज हे ! शक्तिपुञ्ज हे !
भारत-गौरव ! अमृतमूर्तिः ॥ जयतु० ॥



१. 'आजाद हिन्द फौज' इत्यस्य । २. 'फार्वर्ड ब्लाक' इत्यस्य । ३. 'जय हिन्द' उद्घोषस्य प्रवर्तकः । ४. तीक्ष्ण-शस्त्र-धारकः ।

## ४०. अरविन्दो विजयते

( उपजातिर्वृत्तम् )

( १ )

ज्ञानप्रभा-भासित-मानसं तं
सद्धर्म-धौरेयमसक्त-चित्तम् ।
अध्यात्म-पीयूष-हृताऽघवृन्दं
ज्ञानारविन्दं गुणिनं नतोऽहम् ॥

( २ )

क्रान्तेः सृतिं यः समुपास्य पूर्वं
कारागृहे वासमुरीचकार ।
संन्यस्य सर्वं विभवं विरक्तो
यो योगमाधात् तमहं नमामि ॥

( ३ )

पाण्डोश्चरीये सुखदाश्रमे यः
तपोऽन्वतिष्ठत् मुनिवृन्द-वन्द्यः ।
स्वाध्यातम-विज्ञान-परम्परार्थं
यः स्तूयते विश्वमुनिप्रवीरैः ॥

( ४ )

सदा जगद्ध्वान्त-निवारणार्थं
घोरं तपो यः तमुपास्त लोके ।
यज्ज्ञानज्योतिर्ज्वलतीह दिव्यं
गुणारविन्दं तमहं प्रपद्ये ॥

( ५ )

यद्दर्शनं ज्ञानदृशामुपास्यं
मर्त्यं ह्यमर्त्यं विदधाति सद्यः ।
भवाब्धिपारोत्तरणाय सेतुः
घाषारविन्दं व्रतिनं श्रयेऽहम् ॥

●

## ४१. हिमाद्रि-वैभवम् ( क० श्रीबद्रीनाथः )

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

जय जय जय हैमाद्रि-सुकीर्ते !
जय हे भारत-गौरव ! जय हे !
हैम-मुकुट-धृत-मञ्जुल-मूर्ते !
रुचिर-हिमानी[१]-संश्रित-भूते[२] ! ॥ जय० ॥

( २ )

नील-कण्ठ[३]-शिखराञ्चित-भूतिः,
नर-नारायण-गिरि-कृत-कान्तिः ।
देवालय-सुषमा-श्रित-कीर्तिः,
ऋषि-मुनि-बुध-जन-गीत-सुकीर्तिः ॥ जय० ॥

( ३ )

ज्ञान-ज्योत्स्ना-हृत-कलि-पापः,
शान्ति-सुधा-प्रशमित-भव-तापः ।
दिव्य-चेतनोत्साह-प्रतापः,
आध्यात्मिक-शुभ-शक्ति-प्रपातः[४] ॥ जय० ॥

( ४ )

तप्त-कुण्ड-[५]-जल-गौरव-पूर्णः,
तप्त-वारि-हृत-दैहिक-तापः ।
अलकनन्द-[६]-जल-पावित-भूमिः,
देवभूमिरयममृत-सूतिः[७] ॥ जय० ॥

( ५ )

हिम-द्रोणिः[८] जल-पात[९]-सुरम्यः,
सुरुचि-स्रोतसां कल-रव-हृद्यः ।
हिम-वृष्ट्याऽऽहृत-मानस-तुष्टिः,
हैम-प्रभा-गरिमाऽञ्चित-सृष्टिः ॥ जय० ॥

---

१. हिमसमूहः ( Glacier ) २. ऐश्वर्य-युक्ते ! ३. नीलकण्ठगिरिः । ४. निर्झरः । ५. तप्तकुण्ड-नमक उष्णजलसरोवरः । ६. अलकनन्दा सरित् । ७. सुधा-प्रदः । ८. घाटी ( Valley ) । ९. जल-प्रपातः ।

( ६ )

माणा-नीति-दरी[1]-धृत-शक्तिः,
शत्रु-संहृतिः गौरव-गीतिः ।
वसुधारा[2]-सुप्रपात-सुशोभः,
हिममय-गिरिगण-गौरव-गण्यः ॥ जय० ॥

( ७ )

अलकनन्द-सरितो जनि-भूमिः,[3]
बदरी-फल-भर-भूषित-भूमिः ।
दृषदां पुष्ट्या अनुमित-शक्तिः,
शक्ति-भक्ति-गरिमाञ्चित-सिद्धिः ॥ जय० ॥

( ८ )

संतत-पूत-जल-स्रोतो-रम्यः,
सुरभि-समीरण-प्रतिपल-हृद्यः ।
शाप-पाप-भवताप-विहीनः,
आधि-व्याधि-संचार-विहीनः ॥ जय० ॥

( ९ )

बद्रीनाथः ऋषि-मुनि-नाथः,
सुकृत-कर्मणां प्रतिपल-सार्थः[4] ।
शान्तेः स्थानं जागृति-धाम,
विश्व-शान्ति-परिपूरित-कामः ॥ जय० ॥

( १० )

काष्ठ-पुष्प-फल-तरुतति-रम्यः,
हिममय-हिमतति-संतत-हृद्यः ।
भारत-त्राता भारत-भूतिः
जयति हिमाद्रिः गौरव-मूर्तिः ॥ जय० ॥



---

१. नीति-माणा-नामक-दरीद्वययुक्तः । २. वसुधारा-नामको दिव्य-प्रपातः ।
३. जन्मभूमिः । ४. सहयोगी ।

## ४२. हिमाद्रि-वैभवम् ( ख. श्रीकेदारनाथः )

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

जय जय जय हे जय केदार !
भारत-सुषमा-गरिमाऽऽधार !
कीर्ति-सुधा ते प्रतिपल-हृद्या,
मानस-पाप-नाश-सुमनोज्ञा ॥ जय० ॥

( २ )

हैम-मण्डितो हिम-गिरि-शोभः,
सतत-हिमानी-सुषमा-हृद्यः ।
हिमतति-पूत-मनोरम-वेषः,
हैम-शान्ति-हृत-मानस-क्लेशः ॥ जय० ॥

( ३ )

देवागारमिदं सुपवित्रं
शैव-धर्म-कृत-मूर्ति-गुणोच्चम् ।
शैव-मन्दिराऽऽहृत-जन-संघं
केदाराऽञ्चित-पावन-धाम ॥ जय० ॥

( ४ )

शिल्पकला-गरिमोच्चय-पूर्णः,
सुन्दर-सुघटित-दृषदभिरामः ।
स्वर्ण-शृंग-मुकुटाञ्चित-शोभः,
भक्ति-भावना-हृत-जन-क्षोभः ॥ जय० ॥

( ५ )

जाति-भेद-संदूषण-हीनः,
मानस-मान-मोद-मति-लीनः ।
आधि-व्याधि-भय-नाश-मनोज्ञः,
शान्ति-सुधा-संचार-सुहृद्यः ॥ जय० ॥

( ६ )

मन्दाकिनि[1]-जल-वेग-सुरम्यः,
हैम-प्रपात-पात-अभिनन्द्यः ।
गांधि-सरोवर[2]-शोभा-रम्यः,
मन्दाकिनि-जनिभूरतिहृद्यः ॥ जय० ॥

( ७ )

मन्दाकिनि-द्रोणी[3]-शुभ-रम्यः,
देवदारु-सरलै[4]-रतिहृद्यः ।
गौरीकुण्डं[5] मध्ये रम्यं
तप्तजलैर्हरते जन-श्रान्तिम् ॥ जय० ॥

( ८ )

पुष्पाणां परितो रुचिराभा
हरति श्रमं वितनोति मुदं च ।
शाद्वल-शोभित-पूत-वनालिः,
सरितां तुङ्ग-तरङ्ग-मनोज्ञः ॥ जय० ॥

( ९ )

शान्ति-मुक्ति-सन्देश-प्रदाता,
आत्मिक-शक्ति-भक्ति-मति-दाता ।
ज्ञान-भानु-हृत-भव-भय-शोकः,
शान्ति-सुधा-हृत-मानस-तापः ॥ जय० ॥

( १० )

विश्व-शान्ति-सन्देश-सुशोभः,
विश्वप्रेम-शुभ-भाव-प्रणुन्नः[6] ।
जगति ज्ञान-ज्योतिर्वितनोतु
हरतु पाप-भवताप-समूहम् ॥ जय० ॥



---

१. मन्दाकिनी नदी । २. मन्दाकिनी-नद्या उत्पत्तिस्थानं गांधि-सरोवर-नामकम् । ३. घाटी ( Valley ) । ४. देवदार-चीड़-नामक-तरुभिः । ५. केदारनाथस्य मध्येमार्गं स्थितं तप्तवारियुक्तं गौरीकुण्डम् । ६. प्रेरितः ।

## ४३. हिमाद्रि-वैभवम् ( ग. हैमकुण्डं पुष्पघाटी च )

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

जय जय जय हे हैम-सुकुण्ड !
सिक्ख-धर्म-संपूजित-रत्न !
गुरु-गोविन्द[1]-तपस्या-भूमिः
लक्ष्मण-मन्दिर[2]-शोभित-भूमिः ॥ जय० ॥

( २ )

हैमकुण्डमिदमद्भुत-मूर्ति
हिम-गिरि-शोभित-हिममय-मूर्ति ।
हिमाच्छादितं हिममय-वारि
हैम-प्रपात-पात-द्वय[3]-रम्यम् ॥ जय० ॥

( ३ )

घांघरियातः[4] कठिने मार्गे,
स्थितः सदा हैमावृत एव ।
सतत-हिमानी[5]-सुषमा-हृद्यः,
गुरुद्वारा[6]ऽऽश्रित-गौरव-कीर्तिः ॥ जय० ॥

( ४ )

मार्गे तत्र सोपान-सहस्रं[7]
कठिनं क्लिष्टं सतत-सदुर्गम् ।
आरुह्यैतदजस्रमुदारं
कुण्डं प्राप्य शान्ति-सुखमेति ॥ जय० ॥

( ५ )

गुरु-गोविन्दसिंह-यति-वर्यः,
तीव्रं तप्त्वा तपसां राशिम् ।
म्लेच्छ-त्रास-जनतापं हर्तुं
भुवमापेदे भव-भय-हर्ता ॥ जय० ॥

---

१. सिक्खगुरुः श्री गुरुगोविन्दसिंहः । २. जीर्णं शीर्णं लक्ष्मणमन्दिरम् ।
३. हैम-निर्झर-द्वयम् । ४. घांघरिया-स्थानम् । ५. ग्लेसियर (Glacier) ।
६. सिक्ख-गुरुद्वारा इति । ७. १०६७ सोपानानि ।

( ६ )

सिक्ख-धर्म-शुभ-तीर्थमुदारं
शौर्य-शक्ति-संचार-मनोज्ञम् ।
गुरुद्वारा-दर्शित-निजभक्तिः,
सिक्ख-जनः श्रयते त्वविरामम् ॥ जय० ॥

( ७ )

पावनतीर्थं प्रतिपल-रम्यं
शान्ति-सद्म चिर-चिन्तन-धाम ।
जगति तनोतु शान्तिमविरामम्
आत्मिक-शक्तिं वितरतु लोके ॥ जय० ॥

( ८ )

हैमकुण्ड ! तव कीर्तिरुदारा
लोके शान्ति-श्रियं वितनोतु ।
विश्वशान्ति-सन्देशमुदीर्य[1]
भ्रातृभाव-समतां प्रथयेच्च ॥ जय० ॥

( ९ )

पुष्प-द्रोणि[2]-रियमक्षयकीर्तिः,
गन्धमादनाद्रिः[3] सुविख्यातः ।
कठिन-हिमानी-पारं[4] व्याप्ता
क्रोशद्वयं सुम-शोभा-राशिः ॥ जय० ॥

( १० )

नैसर्गिक-सुमनोभिरभिख्यां
लभते मासत्रयं सुषमाढ्या ।
पुष्पद्रोणिः हृत्वा खेदं
कोमलभावं तनुयाच्चित्ते ॥ जय० ॥



१. उक्त्वा, प्रचार्य । २. Valley of flowers. ३. गन्धमादन-पर्वतः ।
४. ग्लेसियरस्य अपरपारे ।

## ४४. ग्राम-लक्ष्मीः

( गीतिका ) ( भुजंगप्रयातं वृत्तम् )

( १ )

इयं ग्रामलक्ष्मीर्मुदं संतनोतु
इयं ग्रामलक्ष्मीः श्रियं संददातु ।
क्वचित् पुष्पवृद्धिः क्वचित् सस्य-वृद्धिः
क्वचिद् धान्यपुष्टिः श्रियं संतनोति ॥ इयं० ॥

( २ )

कृषेरुन्नतौ दत्तचित्ताः समेऽपि
सदा खाद्य-योगो जलादेर्निषेकः ।
कृमीणां विनाशेन सस्यादि-वृद्धिः
मुदं कर्षकाणामजस्रं तनोति ॥ इयं० ॥

( ३ )

अविद्याऽन्ध-ग्रस्ताः पुरा शोक-त्रस्ताः
क्षुधा-रोग-ग्रस्ता मुधा दैन्य-ध्वस्ताः ।
इदानीं नवैर्योजनैः संगतास्ते
नव-ग्राम-लोकाः श्रिया संयुतास्ते ॥ इयं० ॥

( ४ )

क्वचित् कूप-योगो नलानां[1] नियोगः
क्वचित् कुल्यकाभिर्जलानां निषेकः ।
क्वचित् क्षारभूमिर्जलैरुर्वराऽऽस्ते
क्वचित् चक्रबन्धेन[2] सस्याऽभिवृद्धिः ॥ इयं० ॥

( ५ )

क्वचिद् योजनाः स्वास्थ्य-वृद्ध्यर्थमिष्टाः,
रुजं ग्रामजानां क्षयं प्रापयन्ति ।
रुजा मृत्युयोगः क्षयं याति नित्यं
जनाः स्वास्थ्य-लाभेन मोदेन हृष्टाः ॥ इयं० ॥

---

१. नल-कूपानाम् । २. चकबन्दी-प्रयोगेण ।

( ६ )

क्वचिद् दृश्यते योजना संततैवं
कुटीराश्रया वृत्ति-लाभार्थमेव ।
समे ग्रामजाता धनं प्राप्य हर्षाद्
निजं क्लेशजातं मुदा विस्मरन्ति ॥ इयं० ॥

( ७ )

क्वचित् प्रौढ-शिक्षाः क्वचिद् बाल-शिक्षाः
अविद्याऽन्धकारं हृदो नाशयन्ति ।
अयं सर्वतो ज्ञान-शिक्षा-प्रसारः
शुचं ग्रामजानां निहन्त्याशु घोराम् ॥ इयं० ॥

( ८ )

पथामापणानां विकासैर्विवृद्धया
पशोः पालनेनाऽर्थ-वृद्धया च ग्रामाः ।
नवाऽऽविष्कृतैर्बीजजातैः प्रहृष्टाः
कृषेरुन्नतिं वीक्ष्य मोदं भजन्ते ॥ इयं० ॥

( ९ )

विहायाऽन्ध-विश्वास-मूलाः प्रवृत्तीः
विहायाऽऽश्रयं पारदेश्यं[1] स्वतन्त्राः ।
जनान्दोलनेनाऽऽत्म-नैर्भर्य-वृत्त्या
मुदं संश्रिताः शोक-सन्ताप-मुक्ताः ॥ इयं० ॥

( १० )

सुखं धान्यवृद्धिर्जनानां समृद्धिः
सदा साधुभावाश्रया वृत्तिरिष्टा ।
प्रिये ग्रामलोके सुखं शान्तिमिष्टां
जनानां विकासं प्रमोदं तनोतु ॥ इयं० ॥



१. वैदेशिकम् आश्रयं त्यक्त्वा ।

## ४५. कृषकः

( गीतिका ) ( मात्रासमकंजातिः )

( १ )

जयतु कर्षको भारत-त्राता,
अन्न-धान्य-धन-जीवन-दाता ।
शान्त-साधकः प्रतिपल-योद्धा
कृति-तति-रक्त[1]-दोष-संशोद्धा ॥ जयतु० ॥

( २ )

शीत-ग्रीष्म-भय-संशय-मुक्तः,
शक्तिशालि-वृषभ-द्वय-युक्तः ।
आत्मत्यागरतिरन्न-प्रदाता,
भारत-भू-हित-जीवन-दाता ॥ जयतु० ॥

( ३ )

कर्मरतः कृषि-कर्म-प्रवीणो
दैन्य-शोक-संशोषण-क्षीणः ।
लोक-रक्षको लोक-शोषितः,
पौर-रक्षकः पौर-भक्षितः ॥ जयतु० ॥

( ४ )

मान-लोभ-मद-दोष-वर्जितः,
शिक्षित-शासक-वर्ग-तर्जितः ।
सकल-लोक-सस्यान्न-प्रदाता
सततमभाव-दैन्य-संधाता ॥ जयतु० ॥

( ५ )

क्लान्ति-श्रान्ति-भय-क्षोभ-विमुक्तः,
पौर-शान्ति-सुख-वैभव-रिक्तः ।
अज्ञानान्ध-प्रसारण-युक्तः,
ज्ञान-दीधितेर्गौरव-मुक्तः ॥ जयतु० ॥

---

१. कार्यसमूहेऽनुरक्तः ।

( ६ )

त्याग-तपस्या-संयम-मूर्तिः,
दुःख-द्वन्द्व-सहनाऽश्रित-शक्तिः ।
ताप-शीत-वर्षा-भय-मुक्तः,
निज-कृषि-कर्मणि प्रतिपल-युक्तः ॥ जयतु० ॥

( ७ )

भारत-भूमिः कृषक-निर्भरा,
कृषक-पोषिता, कृषकैर्गुप्ता ।
कृषक-पोषणे भारत-पुष्टिः
कृषक-पीडने भारत-पीडा ॥ जयतु० ॥

( ८ )

बीज-खाद्य-सुविधा तु समस्ता
भारत-ग्रामे प्रतिपदमिष्टा ।
धान्यवृद्धिरिह देश-समृद्धिः,
सस्यवृद्धिरिह गौरव-वृद्धिः ॥ जयतु० ॥

( ९ )

ग्राम-शोषणं दीन-शोषणं,
कृषक-शोषणं भारत-दुःखम् ।
कृषेरुन्नतिः भारत-वृद्धिः,
कृषेर्विकासो जनता-ह्रासः ॥ जयतु० ॥

( १० )

कृषक-गौरवं प्रतिपद-रम्यं
कृषक-समृद्धिः भारत-वृद्धिः ।
कृषक-सुरक्षा भारत-रक्षा
कृषक-विभूतिः भारत-भूतिः ॥ जयतु० ॥

## ४६. गीर्वाणवाणी

( गीतिका ) ( भुजंगप्रयातं वृत्तम् )

( १ )

इयं देववाणी सदा सेवनीया
सदा पोषणीया सदा रक्षणीया ।
इयं भारतश्रीरियं देशकीर्तिः
इयं देशवन्द्यैर्वृता वन्दनीया ॥ इयं० ॥

( २ )

यदीष्टं भवे भारतस्याभिवृद्धिः
स्वदेशस्य कीर्तिः स्वदेशस्य मानम् ।
सदाऽध्यात्म-ज्योतिः-प्रसारेण शान्तिः,
तदा देववाणी बुधैः सेवनीया ॥ इयं ॥

( ३ )

कथं शोभते देववाणी प्रकृष्टा
कथं राजते देववर्यैः स्तुतेयम् ।
गुणानां निधानं बुधानां प्रधाना
सुधोनां सदा ज्ञान-विज्ञान-दात्री ॥ इयं० ॥

( ४ )

सदा संस्कृता संस्कृतेर्मूलमन्त्रः
जनैः संस्तुता प्रेम-सद्भाव-दात्री ।
अघानां निहन्त्री सुधा-धाम-धर्त्री
जनानां समस्तं मलं नाशयित्री ॥ इयं० ॥

( ५ )

इयं भारते बद्धमूला प्रशस्ता
स्वदेशे विदेशे स्तुता विज्ञवर्यैः ।
चरित्रोन्नतेर्भाव-सद्भावनायाः
सदा शिक्षणे दत्तचित्ता वरेण्या ॥ इयं० ॥

( ६ )

पराधीनता-पाश-नष्टाऽप्यनष्टा,
सदा दानवैः पीडिताऽप्यक्षतेयम् ।
सुधाऽऽगार-रूपा बुधाऽऽधार-रूपा,
गुणाऽऽकार-रूपा जनाऽऽह्लाद-रूपा ॥ इयं० ॥

( ७ )

अजस्रं गुणाऽऽधायिनी ज्ञान-मूला,
श्रुतेर्नाद-जुष्टा, प्रपुष्टाऽऽगमैश्च ।
सदाऽध्यात्म-पुष्टा, श्रिता दर्शनैश्च
वृता ज्ञान-दीप्त्या, धृता धर्मधुर्यैः ॥ इयं० ॥

( ८ )

श्रिता ज्ञानिभिर्वेद-विद्योपलब्ध्यै
वृता योगिभिर्योग-ज्ञानाऽऽगमाय ।
श्रिता काव्यकारैर्रसाऽऽस्वाद-हेतोः,
धृता नाट्यकारैर्जनाऽऽह्लाद-हेतोः ॥ इयं० ॥

( ९ )

इयं शान्ति-दात्री, इयं ज्ञानदात्री,
इयं भारतोत्थान-तन्त्रं प्रकृष्टम् ।
इयं गौरवाऽऽधान-हेतुः प्रकृष्टः
इयं ज्ञान-ज्योतिः, सुविद्या-प्ररोचिः[१] ॥ इयं० ॥

( १० )

इदं संस्कृतं देशबन्धस्य मूलम्,
इदं देश-प्रान्तादि-भेदस्य हर्तृ ।
इदं भारतस्याक्षयं कोषजातम्,
इदं शान्ति-मूलं सदा पोषणीयम् ॥ इयं० ॥



१. प्रकाशः ।

## ४७. संस्कृत-भाषा-गरिमा

( १ ) ( शिखरिणी )

ऋषीणामाद्यानां
गहन-मननावाप्त-सुयशाः,
श्रुतीनां शास्त्राणां
निखिल-गुण-तत्त्वार्थ-निलया ।
पुरातत्त्वाऽऽधारा[1]
सकल-भव-ज्ञानाब्धि-विभवा,
जयेद् दैवी वाणी
त्रिभुवन-मनोज्ञा बुध-प्रिया ॥

( २ ) ( अनुष्टुप् )

दिव्या गीर्वाणवाणीयं
ज्ञान-शक्ति-सुख-प्रदा ।
मानसे रमतां नित्यं
हृदि मे सुखमावहेत् ॥

( ३ )

संस्कृते सुन्दरं सर्वं
संस्कृते मधुरं समम् ।
संस्कृते ज्ञान-विज्ञानं
संस्कृते सुषमा शुभा ॥

( ४ )

संस्कृतं देवभाषाऽस्ति
विदुषां च मनोरमम् ।
संस्कृतं जन-तापस्य
हारकं परमं मतम् ॥

---

१. पुरातत्त्वानुशीलनस्य आधारभूता ।

( ५ )

देशभक्तिं गुणप्रीतिं
शिक्षितुं यदि ते मनः ।
संस्कृते मन आधत्स्व
ज्ञान-विज्ञान-वारिधौ ॥

( ६ )

संस्कृते नहि काठिन्यं
यथेदमवमानितम् ।
लोक-भाषा-पदं प्राप्ता
विद्वद्भाषेति वन्द्यते ॥

( ७ )

संस्कृतं भारतस्यास्ति
गौरवं मान-वर्धनम् ।
वेदैः शास्त्रैर्युतं काव्यैः
गीता-रामायणादिभिः ॥

( ८ )

संस्कृते संस्कृतिः पूता
राष्ट्र-गौरव-वृद्धि-दा ।
ज्ञानं विज्ञानमध्यात्मं
शिक्षा विश्वसुखावहा ॥



## ४८. आदर्श-शिक्षा-पद्धतिः

( शार्दूलविक्रीडितं वृत्तम् )

( १ )

ज्ञानोद्रेक-प्रणाशिताखिलमला
दुःखौघ-विध्वंसिनी,
कर्तव्याऽऽश्रयणे प्रवृत्ति-मति-दा
दुष्कर्म-संहारिणी।
लोकाऽज्ञान-निवारणे धृतिमति-
विज्ञान-धी-भास्वरा,
शिक्षा स्याज्जगतां हिताय नितरां
कल्याणधुक् कीर्तिदा॥

( २ )

लोकस्याऽभ्युदयं तनोति सततं
निःश्रेयसं शासती,
लोके ज्ञान-तपः-प्रमोद-सुख-धा
दुःखाऽऽधि-संहारिणी।
सद्भावाऽऽश्रयतां गता, गुणगणे
निष्ठां दधत् सात्त्विकीं,
शिक्षा-पद्धतिरस्तु सर्व-जगतः
क्षेमाय शान्त्यै श्रियै॥

( ३ )

सा शिक्षा न, गुणोच्चयं गुणिजने
नो पोषयेत् पुष्टिदा,
या नो जागरयेज्जने कृति-रतिं
सत्ये च निष्ठां ध्रुवाम्।
सा शिक्षा, श्रुति-शास्त्र-बोध-निपुणा
या धर्म-वृत्ति-प्रदा,
सच्चारित्र्य-प्रदान-तोषित-मनः-
कामा, न कामाऽऽश्रया[1]॥

---

१. न तु कामभावनाया आश्रयभूता।

( ४ )

अज्ञानाऽन्ध-तमः-प्रणोद-प्रवणा[1]
लोकोपकृत्येकदृक्[2],
पाषण्डादि-निवारणैक-मतिदा
मोदावहा मानिनाम् ।
सद्वृत्तेन विवर्धिताऽखिल-गुणा
या शस्यते ज्ञानिषु,
या देहाऽऽत्म-मनो-विकास-रुचिरा
शिक्षाऽस्तु सा श्रेयसे ॥

( ५ )

सत्याऽऽचार-विचार-शिक्षण-परा,
सार्वाङ्गिकीमुन्नतिं,
छात्राणां विदधद्, विवेक-विनयाऽऽ-
चार-प्रचारैकधीः ।
चारित्र्योन्नति-साधिका, गुणगणैः
सारल्य-संसाधिका,
लोकेषु प्रचरेत् सुशिष्य-जनि-दा,[3]
शिक्षा सदा कामधुक् ॥



१. विनाशोन्मुखी, २. लोकोपकारस्य मुख्यत्वेन साधिका, ३. सुशिष्य-जन्मदात्री ।

## ४९. राष्ट्र-कुसुमाञ्जलिः

( गीतिका ) ( मात्रासमकं जातिः )

( १ )

कुसुमाञ्जलिरयमुपचित-भावो
देशभक्त-चरणेषु समर्प्यः ।
करुणा-मुदिता-हृत-वर-चित्तो
देशभक्ति-शुभ-भाव-सनाथः ॥ कुसुमा० ॥

( २ )

निज-सुख-लाभ-दुःख-परिहीणैः
माया-ममता-मोह-विहीनैः ।
मातृभूमि-गुण-गरिमाऽऽकृष्टैः
वीरैर्भाग्यवती वसुधेयम् ॥ कुसुमा० ॥

( ३ )

येषां कृति-ततिरद्य सुवासा
कोटि-कोटि-जन-मानस-हासा ।
शक्ति-भक्ति-मति-बोधन-कर्त्री
तेषां जनिरिह गौरव-धर्त्री ॥ कुसुमा० ॥

( ४ )

पाप-ताप-भय-शोषण-क्षुब्धा
राग-रोष-जनद्वेष-विमुग्धा ।
देशद्रोहिभिरतिशय-क्लिष्टा
भारत-भूर्बलिवीरैस्त्राता ॥ कुसुमा० ॥

( ५ )

देश-दुःख-परिशोषित-गात्राः,
भारत-दैन्य-कष्ट-संक्षुब्धाः ।
स्वातन्त्र्यार्थ-समर्पित-देहाः,
धन्यास्ते बलि-वीर-वदान्याः ॥ कुसुमा० ॥

( ६ )

ताप-शोक-भय-चिन्ता-मुक्ताः,
भारत-जननी-ताप-प्रतप्ताः ।
देशार्पित-निज-जीवन-वित्ताः
धन्याः क्रान्ति-सुधा-रस-स्फीताः ॥ कुसुमा० ॥

( ७ )

येषां कृतिरिह जीवन-दात्री
गौरव-गाथा सुख-तति-धात्री ।
स्वार्थं-नाशिकोद्बोधन-कर्त्री
संशय-क्लेश-भ्रान्ति-भय-हर्त्री ॥ कुसुमा० ॥

( ८ )

येषां कीर्तिः अविचल-हृद्या
देशवासिभिः परमभिनन्द्या ।
शक्ति-प्रेरणा-स्रोतोरूपा
जन-जन-मानस-मोहनरूपा ॥ कुसुमा० ॥

( ९ )

क्रान्तिकारिभिर्जीवनदानैः,
शान्तिपरैः सर्वस्वप्रदानैः ।
वीरैः शौर्य-धैर्य-परिपुष्टा,
भारत-जननी गुण-गण-तुष्टा ॥ कुसुमा० ॥

( १० )

भारतमातुर्गौरव-भूताः,
देशभक्ति-गुण-पावित-चित्ताः ।
तेषां चरण-युग्ममभिनन्द्यं
तेषां चरितं सततं वन्द्यम् ॥ कुसुमा० ॥

●

# ५०. जय भारत-माता ( नीराजना, आरती )

( गीतिका )

( १ )

जय भारत-माता
जय जय भारत-माता ।
शक्ति-भक्ति-सुख-दात्री,
जय भारत-माता ॥ जय० ॥

( २ )

स्नेह-सुधा-रस-सिक्ता,
गुण-गण-भूति-वहा ।
ऋषि-मुनि-पूजित-पादा,
गौरव-शान्ति-सुधा ॥ जय० ॥

( ३ )

विश्वशान्ति-उपदेष्ट्री,
ज्ञान-भानु-हृत-शोका ।
अरि-दल-दलन-सुपूता,
आत्म-त्याग-कृत-तोषा ॥ जय० ॥

( ४ )

जीवनदात्री सुखदा
वरदा भूतियुता ।
संसृति-शोक-निरोद्ध्री,
करुणामय-हृदया ॥ जय० ॥

( ५ )

तव चरणार्पित-देहाः,
परिहृत-निज-शुचि-गेहाः।
क्रान्ति-सुधा-रस-स्फीताः,
कति न स्वर्गमुपनीताः ॥ जय० ॥

( ६ )

क्रान्तिकारि-जन-वन्द्या,
शान्तिपरैरभिनन्द्या ।
गरिमाऽऽहृत-भव-भूतिः,
मुक्ता-मणि-गण-सूतिः ॥ जय० ॥

( ७ )

देशभक्त-बलिदानैः,
परिहृत-निज-संतापैः ।
अद्य शान्ति-सुख-हृष्टा
गुणि-गण-गुण-संपुष्टा ॥ जय० ॥

( ८ )

तव चरणामृत-पूताः,
भरत-सुता.रवि-रूपाः ।
तव चरणे बलिदानं
विदधतु वीर-वराः ॥ जय० ॥

# ५१. भारतीय-क्रान्ति-वृत्तम्

## ( क ) १८५७ ईसवीयं स्वातन्त्र्य-युद्धम्

( उपजातिर्वृत्तम् )

( १ ) ( उपोद्घातः )

यथाऽऽङ्ग्ल-राज्यं प्रथितं जगत्यां
यथा प्रसृप्तं भरतावनौ च।
इदं च वृत्तं विदितं समेषां
न विस्तरं वाञ्छति वर्ण्यमेतत् ॥

( २ )

क्रूर-स्वभावैः कुनय-प्रवृत्तैः,
स्व-स्वार्थ-सिद्धौ सततं प्रवृत्तैः।
दुष्टैस्तथाऽऽङ्ग्लैः परिपीडितेयं
धरा यथा स्याद् विधवेव नारी ॥

( ३ )

पापिष्ठमास्थाय कुकर्म-जातं
गर्ह्यां समालम्ब्य सृतिं च पापैः।
तथा प्रदुग्धा भरतावनिस्तु
यथा भवेद् धान्य-धनादि-हीना ॥

( ४ )

निरीक्ष्य तेषां कुसृतिं प्रवीराः
स्वदेश-भक्ताः कुशला युवानः।
स्वदेश-स्वातन्त्र्य-समीहयेरिताः
स्व-जीवनोत्सर्ग-व्रताः समीयुः[1] ॥

( ५ )

राजन्य-वर्गः सकलोऽपि देशे,
सामान्य-लोका दयनीय-भावाः।
आङ्ग्लाऽधिपानां समवेक्ष्य क्रौर्यं
समे समेता निज-तन्त्र-हेतोः[2] ॥

---

१. संगताः, समवेताः। २. स्वतन्त्रता-हेतोः।

( ६ )

आङ्ग्लाऽधिपाः शासन-मत्त-चित्ताः
न सेहिरे भारत-वैभवं तत् ।
स्व-क्रौर्य-कृत्यं निज-शौर्य-वृत्तं
विज्ञाय मोहान्ध-धियो बभूवुः ॥

( ७ )

तदेव क्रान्तिर्जन-क्षोभ-मूला
देशे विवृद्धा जनता-बलेन ।
स्वातन्त्र्य-वातेरित-क्रान्तिवह्निः,
समेऽपि देशे प्रसृतः समन्तात् ॥

( ८ )

श्री धोंधुपन्तो[१] वर-वीर-तात्या-
टोपे[२] च बाबू-कुंवरश्च सिंहः[३] ।
लक्ष्मीश्च बाई[४], नृप-वेणि-माधो[५]
श्री मौलवी शाह-मदुल्ल[६]-वर्याः ॥

( ९ )

नवाब-खानश्च बहादुरोऽसौ[७],
सा वीर-बेगम् हजरत् महल् च[८] ।
आङ्ग्लीं चमूं नाशयितुं प्रवीराः,
नेतृत्व-कार्ये प्रमुदा प्रवृत्ताः ॥

( १० )

इमे समेता निज-शौर्य-कृत्यैः,
आङ्ग्लाऽधिपानां भयमेव तेनुः ।
आङ्ग्लैर्मतं भारत-शासनं तु
संक्षीयमाणं मृत-प्रायमेव ॥

---

१. श्री नानासाहबो धोंधुपन्त-नामा । २. सेनापतिः श्री तात्या टोपे ।
३. श्री बाबू कुंवरसिंहः । ४. झांसी-राज्ञी श्रीमती लक्ष्मी-बाई ।
५. श्री राना बेनीमाधो । ६. मौलवी अहमदउल्ला शाहः ।
७. नवाब खान बहादुर खाँ । ८. बेगम हजरत-महल-नाम्नी ।

( ११ )

दौर्भाग्य-ग्रस्ता सकलाऽपि क्रान्तिः
न देश-स्वातन्त्र्य-सुखाय जाता।
आङ्ग्ली चमूर्नव्य-सुहेति-युक्ता
जयं च लेभे जनताऽहिताय॥

( १२ )

यः क्रान्ति-वह्निः प्रसृतश्च देशे
स्वातन्त्र्य-हेतोर्न स नाशमाप।
भस्मावृतो वह्निरिवातिगुप्तो
देशं समस्तं ज्वलयन्निवाऽऽस्त॥

( १३ )

विचार-धारा द्विविधा प्रवृत्ता
स्वातन्त्र्य-हेतोर्जनता-हिताय।
स्वातन्त्र्य-प्राप्तिर्नृपनीति-मूला[1]
सुधार-मूला च समाज-शुद्धिः॥

( १४ )

केचित् प्रवृत्ता नृप-नीति-कार्ये
क्रान्त्याश्रये शान्ति-समाश्रये च।
केचित् समाजस्य सुधार-कार्ये
स्वदेश-मानोन्नति-गौरवाय॥

( १५ )

तपस्विनः केचिदिहात्र जाताः
समाज-धर्मोन्नति-दत्त-चित्ताः।
एभिः समाजस्य सुधार-कार्ये
स्वजीवनं देशहिताय दत्तम्॥

---

१. राजनीत्याश्रया।

( १६ )

बुधाग्रणीः श्री-नृप-राममोहनः[1]
श्री-केशवः सेन[2]-बुधश्च बङ्गे ।
लोकोद्धृतौ धार्मिक-प्रोन्नतौ च
मुदा प्रवृत्तौ जन-संग्रहे च ॥

( १७ )

स्वभाषणैर्लेखन-कार्य-जातैः
निजाभिमानोन्नति-शौर्य-कृत्यम् ।
समाज-शुद्धिं निज-धर्म-बुद्धिं
प्रावर्तयन् ते जनता-मनःसु ॥

( १८ )

यतिर्दयानन्द[3]-वरः स्वदेशे
प्रासारयज्जीवन-ज्योतिरेव ।
स्वधर्म-वृद्ध्यै निज-मान-वृद्ध्यै
अस्थापयत् चाऽऽर्यसमाजमेव ॥

( १९ )

वेदादि-भाष्यैर्जनता-प्रचारैः
'सत्यार्थ'[4]-कान्त्या निजदेश-भक्त्या ।
संस्थाप्य स्वं गौरवमार्यजातेः
क्रान्तेः सृतिं चारुतरां व्यधत्त ॥

( २० )

श्री-रामकृष्णस्य[5] वटुर्गुणज्ञः
आनन्द-युक्तश्च विवेकनामा[6] ।
देशे विदेशे निज-देश-मानम्
अस्थापयद् भारत-गौरवं च ॥

---

१. श्री राजा राममोहनरायः । २. श्री केशवचन्द्रसेनः । ३. श्री स्वामी दयानन्दः । ४. सत्यार्थ-प्रकाश-ग्रन्थस्य । ५. श्री रामकृष्ण-परमहंसः । ६. स्वामी विवेकानन्दः ।

( २१ ) ( स्वातन्त्र्य-युद्धम् )

स्वाधीनतायाः प्रथमं तु युद्धं
प्रारब्धमेतद् भरतावनौ यत् ।
तन्मूलभूतः कुनय-प्रचारः
स्वार्थाऽऽश्रया दुर्धर-कूट-नीतिः ॥

( २२ )

अन्याय-नीत्या सुदुराग्रहेण
दुष्टेन राज्येन कुकृत्य-जातैः ।
स्वाधीनता-युद्धमिदं प्रवृत्तं
विदेशि-राज्योत्खननस्य हेतोः ॥

( २३ )

यल्लार्ड-डल्हौजि[१]-कुकृत्य-मूला
साम्राज्य-संस्थापन-कूटनीतिः ।
अन्यायमूला च स्वराज्य-हर्त्री
संक्षोभकर्त्री पप्रथेऽत्र देशे ॥

( २४ )

राजन्यवर्गोऽप्यधिकार-हीनः
च्युताधिकारो विवशीकृतश्च ।
झांसी-सताराऽवध-राज्य-नाशात्
क्रुधाऽऽङ्ग्ल-राज्य-क्षय-हेतुरासीत् ॥

( २५ )

यच्चाऽऽर्थिकं शोषणमत्र वृत्तम्
उद्योग-नाशाय स्वदेशजानाम् ।
कृषीवलाः शिल्पि-जनाः समेऽपि
विक्षोभ-वह्नौ सततं प्रदग्धाः ॥

( २६ )

सामाजिके धार्मिक-कृत्य-जाते
आङ्ग्लैः कुकृत्याऽभिनयः कृतश्च।
ख्रिस्तीय-धर्मस्य प्रचार-हेतोः
भाषेयमाऽऽङ्ग्ली परिचालिताऽऽसीत्॥

( २७ )

सैन्यप्रबन्धेऽपि विभेद-मूला
नीतिः श्रिता आङ्ग्ल-जनोच्चतायै।
विभेदमाश्रित्य समस्त-सैन्याः
विद्रोह-कार्ये रुचिमादधुस्ते ॥

( २८ )

गो-शूकरस्यैव वसाऽभिनिर्मितं
यद् गोलिकाया मुखमस्ति तत्तु।
दन्तेन छेद्यमिति रोष-हेतोः
विद्रोहमास्थुर्यवनाऽऽर्य-योधाः ॥

( २९ ) **( श्रीमङ्गल-पाण्डेयः )**

तत्रैव श्री-मंगल-पण्डितो[१]ऽपि
बैरक्पुरे[२] सैन्य-निवास-भूमौ।
सैन्याधिपं ह्यूसन[३]-मत्र हत्वा
विद्रोह-कार्योद्घटनां व्यधत्त॥

( ३० )

सैन्याधिपैराङ्ग्ल-चमू-प्रकृष्टैः
धृतः स योधो वर-वीर-कीर्तिः।
शूलिं श्रितो हर्ष-भर-प्रहृष्टो
लेभे यशः स्थास्नु पवित्रमेव॥

---

१. श्री मंगलपांडेयः। २. कलिकाता-समीपस्थे बैरकपुरे। ३. सार्जेन्ट मेजर ह्यूसन-नामकम्।

( ३१ ) ( श्रीनाना-साहबः )

'नाना'-वरः क्रान्ति-पवित्र-दूतः
साहाय्यमाप्त्वाऽजिमुलस्य[1] योद्धुः ।
सशस्त्र-क्रान्तेः सुविचार्य योजनां
व्यधत्त देशस्य स्वतन्त्रतायै ॥

( ३२ )

संप्रेष्य दूतान् नगरे वने च
राज्येषु सैन्येषु नरेश-वर्गे ।
संप्रापयत् क्रान्ति-निदेशमेतं
रक्तेन पद्मेन च रोटिकाभिः[2] ॥

( ३३ )

मे-मास-त्रिंशैक[3]-तिथिर्नियुक्ता
विद्रोह-वह्नेर्ज्वलनस्य हेतोः ।
सैन्यालये पौर-समुच्चये च
विद्राह-वह्निः सहसा प्रवर्त्यः ॥

( ३४ )

विद्रोह-वह्निर्मयराष्ट्र-क्षेत्रे[4]
व्याप्तो विदेशीय-कुकृत्य-हेतोः ।
संघर्षमेत्याऽऽङ्ग्ल-प्रशासकैस्तु
शस्त्रालयेऽभूत् क्षुभिताऽधिकारः ॥

( ३५ )

संप्राप्य दिल्लीं सहसा निशीथे
ते रक्त-दुर्गे[5] यवन-प्रकेतुम् ।
प्रासारयन्, शाह-बहादुरं[6] तम्
अस्थापयन् भारत-राष्ट्र-राजम् ॥

१. नाना-साहबस्य मन्त्री अजीमुल्ला-नामकः । २. क्रान्ति-चिह्न-भूत-रक्तकमलदानेन, ग्रामेषु रोटिका-वितरणेन च । ३. ३१ मई १८५७ ईसवीय-तिथिः । ४. मेरठ-छावनी-क्षेत्रे । ५. लाल-किला-भूमौ । ६. मुगल-सम्राजं बहादुर-शाह जफर-नामानम् ।

( ३६ ) **( बेगम-जीनत महल )**

तत्रैव दिल्ल्यां नरराज-पत्नी
शूरा महल् बेगम-जीनता[१] सा ।
क्रान्तेर्धुरं वोढुमसौ समर्था
स्व-प्राणदानेन यशो दधार ॥

( ३७ )

साऽघोषयद् वीर-वरान् वरेण्यान्
स्व-देश-रक्षा निज-धर्म-रक्षा ।
प्राणैः प्रिया, प्राण-समर्पणेन
आङ्ग्ला विनाश्या निज-भूश्च रक्ष्या ॥

( ३८ )

विद्रोह-वह्निः प्रसृतः प्रदेशे
वाराणसी-कर्णपुर-प्रभागे ।
प्रयाग-झांसी-अवधादि-क्षेत्रे
विद्रोह-केन्द्राणि बभूवुरादौ ॥

( ३९ ) **( श्री नाना-साहबः )**

बिठूर-क्षेत्रे वर-वीर-नानाः[२]
विद्रोह-नेतृत्वमधात् सुधीरः ।
साहाय्यमाप्त्वा जनता-बलस्य
अस्थापयत् स्वीय-प्रशासनं च ॥

( ४० )

भीता जिताश्चाङ्ग्ल-चमू-प्रवीराः
प्रस्थापितास्ते सहसा प्रयागम् ।
श्री कर्नलो नील[३]-खलः प्ररोषाद्
भस्मावशेषं नगरं[४] चकार ॥

---

१. मुगल-सम्राड्-वहादुरशाहस्य पत्नी बेगम जीनत-महल-नाम्नी । २. श्री नाना साहबः, धोंधुपन्त-नामा ( मृत्योः संभावित-तिथिः २४-९-१८५९ ई० ) ३. प्रयागस्थः कर्नल-नील-महोदयः । ४. प्रयाग-नगरम् ।

( ४१ )

आङ्ग्ली चमूः कर्णपुरं[1] पुनश्च
संप्राप्य तत्र विदधे नृशंसम्।
निहत्य विद्रोहि-वरान् तु क्रौर्याद्
अस्थापयत् कर्णपुरेऽधिकारम्॥

( ४२ )

संप्राप्य दिल्लीं च सु-रक्त-दुर्गे[2]
ते[3] प्राहरन् शक्ति-बलेन युक्ताः।
निहत्य योधान् वर-भारतीयान्
दुर्गे पुरे स्वाधिकृतिं वितेनुः॥

( ४३ )

निगृह्य शाहं तु बहादुरं तं
पुत्रैः प्रपौत्रैः सहितं तदैव।
निहत्य पुत्रान् च, बहादुरं तं
प्रावासयन् रंगुन[4] क्षेत्र-मध्ये॥

( ४४ ) **( बेगम हजरत-महल )**

प्रान्तोत्तरे[5] लक्ष्मण-पौर-मध्ये[6]
वाजिद् अलीशाह[7]-प्रिया सुवीरा।
नाम्ना तु बेगम् हजरत् महल्[8] सा
स्व-शौर्य-कृत्यैरजराऽमराऽभूत्॥

( ४५ )

संधार्य क्रान्तेर्धुरमात्त-शौर्या
शूरान् प्रवीरान् समबोधयत् सा।
स्वातन्त्र्य-वह्नेर्नहि जातु नाशः
प्राणार्पणेनाऽपि भवेत् स्वदेशे॥

---

१. कानपुर-नगरम्। २. लाल-किला-क्षेत्रे। ३. आङ्ग्ला योधाः। ४. बर्मा-देशे रंगून-नगरे। ५. उत्तरप्रदेशे। ६. लखनऊ-नगरे। ७. लखनऊ-शासकः श्री वाजिद अली शाहः। ८. वाजिद अली शाहस्य पत्नी बेगम हजरत महल-नाम्नी।

( ४६ )

गजेन्द्रमारुह्य खरान् सुयोधान्
सा प्रैरयत् शत्रु-विनाशनाय ।
न्यायस्य सैन्यस्य च सुव्यवस्थां
विधाय साऽयुध्यत युद्ध-क्षेत्रे ॥

( ४७ )

युद्धे परास्ताऽपि गुरिल्ल-युद्धं[१]
सा चाऽहमद् शाह[२]-सुनायकत्वे ।
प्रावर्तयद् देश-स्वतन्त्रतायै
चण्डीव शत्रोर्हननाऽऽप्त-कीर्तिः ॥

( ४८ ) **( झांसी-राज्ञी लक्ष्मीबाई )**

राज्ञी च झांसी-नगरस्य 'लक्ष्मीः'[३]
'बाई'-ति ख्याता समराऽऽप्त-लक्ष्मीः ।
राजन्य-गङ्गाधर-राव-पत्नी
दुर्गेव शौर्येण जगाम ख्यातिम् ॥

( ४९ )

सा दत्तकं पुत्रमवाप्य राज्ये
दामोदरं[४] तं चकमेऽभिषेक्तुम् ।
आङ्ग्ला निषिध्यैतदभीष्ट-कृत्यं
झांसी-सुराज्यं जगृहुर्बलेन ॥

( ५० )

सा चाऽऽत्म-संमान-सुरक्षणार्थं
योधेव धीरा रिपु-व्यूह-हर्त्री ।
ह्यूरोज[५]-सेनां तरसा विहत्य
सा प्रस्थिता कालप्रिया[६]-समीपम् ॥

---

१. गुरिल्ला-युद्धम् । २. मौलवी अहमदशाहः फैजाबादीयः । ३. श्री मोरो पन्त तांबे-इत्यस्य पुत्री, राजा गंगाधर रावस्य पत्नी (जन्म १९-११-१८३५ ई०, मृत्युः १८-६-१८५८ ई० ) । ४. दामोदर राव-नामकम् । ५. आंग्ल-जनरलः सर ह्यूरोजः ( Sir Hugh Rose ) । ६. कालपी-नगरम् ।

( ५१ )

"नाना'-प्रवीरस्य सुयोध-मुख्यैः
संगत्य सा ग्वालियरं[१] प्रपेदे।
टोपे तु तात्यां[२] समवाप्य हृष्टा
साऽस्थापयद् ग्वालियरेऽधिकारम् ॥

( ५२ )

ह्यूरोज-वीरोऽपि सशस्त्र-सैन्यैः
युतो रुषा ग्वालियरं प्रपन्नः।
प्रचण्ड-युद्धे सह तात्यया सा
दुर्भाग्य-हेतोर्विजयं न लेभे ॥

( ५३ )

सा शत्रुसेनां निज-पूर्व-द्वारे
संहृत्य दुर्गेव कराल-रूपा।
स्मिथं[३] विजित्याऽपि ह्यूरोज-सेनया
धृता प्रहारैस्त्रिदिवं प्रयाता[४] ॥

( ५४ )

श्री रामचन्द्रो[५] निज-स्वामि-भक्त्या
तस्यास्तनुं शस्त्र-निकृत्त-गात्राम्।
संगृह्य सद्यस्तृण-काष्ठ-वह्नौ
चितां विधायाऽन्त्यक्रियां व्यधत्त ॥

( ५५ )

सा राजपुत्री वर-वीर-योधा
वीराङ्गनाऽग्रेसरतां प्रपन्ना।
स्वदेश-स्वातन्त्र्य-क्रतौ प्रवृत्ता
आ-सूर्य-चन्द्रं यशसाऽभियुक्ता ॥

---

१. ग्वालियर-नगरम्। २. नानासाहबस्य सेनापतिः श्री तात्याटोपे। ३. आंग्ल-सेना-नायकं जनरल स्मिथ-महोदयम्। ४. १८-६-१८५८ ईसवीये। ५. लक्ष्मीबाई-सेवकः श्री रामचन्द्रराव देशमुखः।

( ५६ )

त्रि-विंश-वर्षैव[1] गुणाऽऽप्त-कीर्तिः
धीरा सुवीरा वर-वीर-पुत्री ।
समर्प्य देशाय स्व-देह-वैभवं
न कस्य श्रद्धाञ्जलि-भाजनं सा ॥

( ५७ ) ( श्री तात्या टोपे )

श्री पाण्डुरंगस्य भटस्य[2] सूनुः
तात्या तु टोपे[3] नरपुंगवोऽयम् ।
सेनापतिः क्रान्ति-दवानलस्य
'नाना'-प्रवीरस्य सुनायकत्वे ॥

( ५८ )

नाना[4] च तात्या वर-वीर-रावः
लक्ष्मीश्च बाई चतुरङ्ग-रूपाः ।
अहर्निशं देश-स्वतन्त्रतायै
प्राणार्पणेनाऽप्ययतन्त वीराः ॥

( ५९ )

तात्या तु टोपे रणनीति-विज्ञः
आंग्लीं चमूं नव्य-सुशस्त्र-सज्जाम् ।
मुहुर्मुहुर्भारत-शूर-वीरैः
संगत्य युद्धे तरसा जघान ॥

( ६० )

पराजयेऽप्यात्म-बलाभिमानी
हिमाद्रि-शक्तिर्युधि कर्मशूरः ।
क्रान्तेः पताकां नयनाभिरामाम्
आदाय बभ्राम विभिन्न-राज्ये ॥

---

१. त्रयोविंशवर्षीया । २. श्री पांडुरंगभट्टस्य । ३. तात्या टोपे; वास्तविकं नाम रामचन्द्र पांडुरंग येवलडीकर इति । (जन्म १८१४ ई०) । ४. नाना साहब पेशवा, तात्या टोपे, राव साहब पेशवा, लक्ष्मीबाई च ।

( ६१ )

राबर्ट्‌स-होम्सौ[1] सह यार्कंकेण[2]
तात्या-चमूं तां तु जिघांसया ते ।
निरोध्य युद्धे ननु भीलवाड़े[3]
तात्यां निरोद्धुं सफला बभूवुः ॥

( ६२ )

उत्तीर्य सद्यः स तु नर्मदां तां
संप्राप्तवान् दक्षिण-भारतं तम् ।
न दक्षिणे क्रान्तिरियं प्रसर्पेद्
आंग्ला बभूवुर्भय-कम्प-क्षुब्धाः ॥

( ६३ )

श्री होनरः स्मिथ् च मिचेल-वर्याः[4]
तं रोद्धुकामाः सहसा समेताः ।
वृतोऽपि सैन्यैर्न मुमोच धैर्यं
न शेकुरेतेऽपि च तं निरोद्धुम् ॥

( ६४ )

श्रीमानसिंहस्य[5] गृहे स्थितोऽसौ
विश्वासघातेन निरोधमाप ।
शूलिं श्रितो हर्ष-भर-प्रसन्नो
दिवं ययौ[6] भारत-राष्ट्र-भूतिः ॥

( ६५ ) **( श्री कुंवरसिंहः )**

विहार-राज्ये जगदीश-पुर्यां[7]
राजा स बाबू कुंवरश्च सिंहः[8] ।
विहार-राज्ये निज-शौर्य-धैर्याद्
आंग्लीं चमूं स कतिधा जघान ॥

---

१. आंग्ल-चमू-सेनाध्यक्षौ राबर्ट्‌स-होम्स-महोदयौ । २. ब्रिगेडियर यार्कः । ३. भीलवाड़ा-स्थले । ४. ब्रिगेडियर होनरः, ब्रिगेडियर स्मिथः, मेजर-जनरल मिचेलश्च । ५. ग्वालियर-राज्ये नरवराधीशस्य । ६. १८-४-१८५९ ईसवीये । ७. जगदीशपुर ( आरा, बिहार ) । ८. जगदीश-पुराधीशः बाबू कुंवरसिंहः ।

( ६६ )

मुहुर्मुहुर्युद्ध-परायणोऽसौ
सिंहक्रमः सिंह-समान-शक्तिः।
संवर्ध्य मातुर्गरिमाणमेष
युद्धे क्षतो वीरगतिं प्रपेदे॥

( ६७ )

अन्ये च केचिद् गरिमाऽनवद्याः
वीराः श्रिता द्यामिह क्रान्ति-वह्नौ।
स्मर्तव्य-शेषा गुण-गौरवेण
केषां न वन्द्या निज-देश-भक्ताः॥

( ६८ ) **( श्री सिदो माझी )**

'माझी सिदो'[1] वीरवरो विहारे
प्राज्वालयत् क्रान्ति-दवाग्निमेतम्।
'त्यजन्तु आंग्ला भरतावनिं' तु
सोऽघोषयत् क्रान्ति-निनादमेतम्॥

( ६९ )

सन्थाल-जात्यां तु प्रसार्य घोषं
विहार-क्षेत्रे विजयं प्रपेदे।
देशद्रुहां कार्यततेर्निरुद्धः
शूलिं श्रितो वीरगतिं प्रपन्नः॥

( ७० ) **( श्री विश्वनाथ शाहदेवः )**

विहार-राज्ये लघु-नागपुर्यां[2]
श्री विश्वनाथो गुणि-शाहदेवः[3]।
रांची-प्रदेशे विजयं प्रघोष्य
आंग्लीं चमूं स युधि संजहार॥

---

१. विहार-राज्ये सन्थाल परगना-मण्डले भगनाडीह-ग्राम-वास्तव्यः क्रान्तिदूतः सिदो माझी-नामा। २. विहार-राज्ये छोटा नागपुर-क्षेत्रे। ३. ठाकुरविश्वनाथ-शाहदेवः।

( ७१ )

राजा च वीरः स हि शाहदेवः
स्वातन्त्र्य-वह्नौ शलभावतारः ।
विश्वास-घातेन गृहीत एष
शूलिं श्रितो हर्ष-भर-प्रहृष्टः[१] ॥

( ७२ ) ( श्री अमरसिंहः )

श्रिया युतः श्री अमरस्तु सिंहो[२]
भ्राता प्रियः श्री कुंवरस्य[३] राज्ञः ।
स्व-भ्रातृ-निर्दिष्ट-पथं प्रपन्नः
आंग्लीं चमूं नाशयितुं प्रवृत्तः ॥

( ७३ )

आरा-नगर्यां विजय-प्रकेतुं
संस्थाप्य मासत्रयमेष वीरः[४] ।
वनं श्रितो घोर-गुरिल्ल-युद्धे
स्वातन्त्र्य-हेतोः सततं प्रवृत्तः ॥

( ७४ ) ( श्री मर्दनसिंह )

श्रीमर्दनो[५] बानपुरस्य भूपः
क्रान्तेर्दवाग्निं ललिता-नगर्याम्[६] ।
प्रसार्य बुन्देल-भुवः प्रभागे[७]
अस्थापयत् स्वीय-प्रशासनं सः ॥

( ७५ )

स प्राणदानं प्रददे शरण्यः
श्री गोर्डनं[८] डॉक्टर-ब्रीथनं[९] च ।
तात्यां च लक्ष्मीं[१०] समवाप्य सद्यः
सैन्यस्य नेतृत्व-कृतौ नियुक्तः ॥

---

१. १६-४-१८५८ ई० । २. बाबू कुंवरसिंहस्य भ्राता अमरसिंहः । ३. श्रीकुंवरसिंहस्य । ४. जून-अक्टूबर १८५७ ई० । ५. बानपुर-नरेशः श्रीमर्दनसिंहः । ६. ललितपुर-सैन्यालये । ७. बुन्देलखण्ड-क्षेत्रे । ८. ललितपुर-जिलाधीशं श्रीगोर्डनम् । ९. डॉ० ब्रिथन-नामकम् । १०. तात्या टोपे-लक्ष्मीबाई च ।

( ७६ )

कालप्रिया[1]-क्षेत्रमवाप्य वीरः
आंग्लीं चमूं प्राहरताऽऽर्यचेताः।
मुरार-क्षेत्रे विजितस्तु आंग्लैः
आजीवनं बन्दिगृहं प्रपन्नः[2] ॥

( ७७ ) (श्री बखतबली)

श्री छत्रसालस्य कुलप्रदीपो
बभूव बख्तश्च बली[3] सुधीरः।
श्री मर्दनस्यास्य सुहृद्वरोऽसौ
आंग्लीं चमूं संहृतवानजस्रम् ॥

( ७८ )

झांसी-सुदुर्गे, सगरस्य दुर्गे[4]
माल्थौन-क्षेत्रे, मदने पुरे[5] च।
आंग्लीं सुसेनां तरसा विजित्य
स्वातन्त्र्य-केतुं प्रमुदा न्यधत्त ॥

( ७९ )

दुर्गेऽधिकारस्य कथा यदाऽऽप्ता
सुखावहा ग्वालियरस्य क्षेत्रे।
तदैव लक्ष्म्या[6] निधनं निशम्य
वज्राहतो वृक्ष इवावतस्थे ॥

( ८० )

मुरार-क्षेत्रे सह मर्दनेन[7]
बन्दीकृतोऽराति-निषूदनोऽसौ ।
कारागृहे पञ्चनद-प्रदेशे
लाहौर-पुर्यां त्रिदिवं प्रयातः[8] ॥

---

१. कालपी-क्षेत्रे। २. जन्म २८-९-१८५८ ई०, मृत्युः २२-७-१८७९ ई०। ३. शाहगढ़-नरेशः श्री बखतबली। ४. सागर-स्थित-दुर्गे। ५. मालथौन घाटी, मदनपुर घाटी च। ६. लक्ष्मीबाई-राज्ञ्याः। ७. मर्दनसिंह-नृपेण सह। ८. मृ० २८-९-१८७३ ई०।

( ८१ ) ( श्रीराव-तुलारामः )

श्री तेजसिंहस्य सुपौत्रवर्यो
रावः तुलाराम-रिवाड़ि-भूपः[१] ।
संगृह्य लक्षाधिकमेव वित्तं
स्वातन्त्र्य-युद्धे प्रददौ मुदैव ॥

( ८२ )

नार्नौल-क्षेत्रे[२] यदभूत्तु युद्धम्
आंग्लैः सुयोधैः प्रखरं प्रचण्डम्[३] ।
शौर्य-प्रहृष्टा विजयस्य लक्ष्मीः
मुदैनमेव चकमे प्रसर्तुम् ॥

( ८३ )

आंग्लस्य सैन्यस्य सहायतार्थं
सैन्यं ददुर्देशद्रुहो नरेशाः ।
आंग्ली चमूरेवमवाप लक्ष्मीं
रावो ययौ शूरवरं तु तात्याम् ॥

( ८४ )

विदेश-साहाय्यमवाप्तुकामः
संन्यासि-वैद्यादि-सुवेषमेत्य ।
ययौ विदेशान् यवन-प्रदेशान्
तत्रैव देशर्द्धि-व्रतः श्रितो द्याम्[४] ॥

( ८५ ) ( लाला हुक्मचन्द्र-जैनः )

सुतो दुनीचन्द्र-जिनस्य दक्षः
श्री हुक्मचन्द्रो[५] नर-वीर-वर्यः ।
हांसी-नगर्यां[६] समवाप्य जन्म
स्वशौर्यकृत्यैः प्रबभूव योधः ॥

---

१. रिवाड़ी-नरेशो राव तुलारामः । २. नारनौल-नगर-समीपे । ३. १६ नव० १८५७ तिथौ । ४. ८ सित० १८६२ तिथौ । ५. लाला हुक्म चन्द्र-जैनः, जन्म १८१६ ई० । ६. हरियाणा-प्रदेशे हिसार-मण्डले हांसी-नागरी ।

( ८६ )

सेवा-कृतौ शाहबहादुरस्य
युक्तोऽपि क्रान्तेः सुनिशम्य घोषम् ।
संप्राप्य दिल्लीं नरवीर-तात्यां
समार्पयद् देशहिताय सेवाम् ॥

( ८७ )

मिर्जा-मुनीरस्य[1] सुयोगमाप्त्वा
आभीर-क्षेत्रे[2] जन-संग्रहेण ।
तत्राऽऽङ्ग्ल-सेनोत्खननाय शूरो
युद्धं खरं स व्यदधात् सुधीरः ॥

( ८८ )

आङ्ग्लैः खलैः स निजगेह एव
शूलौ समारोप्य समापितोऽभूत्[3] ।
अन्त्येष्टि-कार्याय न तस्य देहः
समर्पितोऽभूत् तु तदाऽऽङ्ग्लदेश्यैः॥

( ८९ ) **( श्रीराव गोपालदेवः )**

गोपालदेवो वर-वीर-योधो
रावः तुलाराम-सुहृत्-सुभ्राता[4] ।
स नारनौले प्रखरे तु जन्ये[5]
नेतृत्व-कार्यं प्रमुदा चकार ॥

( ९० )

आङ्ग्ली चमूः क्रान्ति-हुतात्मनां तु
संप्रेक्ष्य शौर्यं वर-वीर-कार्यम् ।
स्टेफर्ड-केप्टन्-निज-युद्धवृत्ते
रावस्य चम्वाः प्रशशंस शौर्यम् ॥

---

१. मिर्जा मुनीर-नामकः सहयोगी । २. हरियाणा-प्रदेशे । ३. १९ जन० १८५८ ई० तिथौ । ४. रिवाड़ी-नरेशस्य राव-तुलारामस्य भ्राता । ५. १६ नव० १८५७ ई० ।

( ९१ )

तत्रैव युद्धे स हि राववर्यः
क्रुधा दलन् शत्रु-चमूं पुरस्तात् ।
स्वदेश-रक्षार्थ-धृतव्रतोऽसौ
युद्धे हतो वीरगतिं प्रपेदे ।।

( ९२ ) ( नर्तकी अजीजन )

अजीजनाख्या[१] यवनी सुवीरा
नृत्याङ्गना हास-विलास-गेहा ।
निशम्य 'नाना'-[२]प्रवरस्य घोषं
मुदा स्वदेशाय समार्पयत् सा ।।

( ९३ )

आश्रित्य सा सैनिक-वेषमेव
संगृह्य बालाश्च स्वदेशभक्ताः ।
युद्धेऽश्वमारुह्य निगृह्य खड्गं
मुहुर्मुहुर्युद्धपरा बभूव ।।

( ९४ )

'नाना'-वरः[३] कर्णपुरस्य क्षेत्रे
अस्थापयत् स्वीय-सुराज्यमेव ।
आंग्ली चमूः प्राप्य सहायतां तु
चक्रे पुनः कर्णपुरे स्व-राज्यम् ।।

( ९५ )

तां बन्दिनीं प्रेक्ष्य स हेवलाको[४]
रूप-श्रिया मुग्धतरो बभूव ।
क्षमां तु तस्यै स प्रदातुकामः
क्षमां तु तां याचितुमादिदेश ।।

---

१. अजीजन-नाम्नो कर्णपुरस्य नृत्यांगना यवन-महिला । २. श्रीनाना-साहबस्य । ३. श्रीनाना-साहबः । ४. आंग्ल-सेनापतिः हेवलाकः ( Havelock ) ।

( ९६ )

सा वीर-योषित् तु जगर्ज रोषाद्
जगाद वाक्यं—शृणु, हेवलाक !
आंग्ल-क्षयम् आंगल-राज्य-नाशम्
इच्छामि, नान्या मम कामनाऽस्ति ॥

( ९७ )

स हेवलाको नृपशुः क्रुधा तु
तां गोलिकाघात-वधं दिदेश ।
'नाना'-जयं[1] देश-जयं वदन्ती
क्षणेन सा वीर-गतिं प्रपेदे ॥

( ९८ ) ( **श्री बालवीरः अप्पा** )

जोरापुराधीश-वरः स बालः
'अप्पेति' ख्यातः[2] सह सैनिकैस्तु ।
शान्ते पुरा दक्षिण-भारतेऽपि
स्वातन्त्र्य-दावाग्नि-प्रसारमैच्छत् ॥

( ९९ )

सालारजंगस्तु निजाम-शाहो
निगृह्य तम् आंग्ल-नृपस्य प्रादात्[3] ।
कारागृहे टेलर[4]-नामकाऽऽङ्ग्लः
प्रलोभनैर्लोभयितुम् इयेष ॥

( १०० )

उवाच—मुक्तिर्भविता तवात्र
प्रकाशयेस्त्वं यदि मित्र-नाम ।
उवाच तं टेलरमेष वीरो
विश्वासघाती भवितुं न चार्हः ॥

---

१. नानासाहबस्य जयम् । २. दक्षिणभारते जोरापुरस्य शासको वीर-बालकः 'अप्पा' । ३. फरवरी १८५८ ई० । ४. आंग्ल-शासकः टेलर-नामा ।

( १०१ )

वृणे वरं मृत्युमहं स्वदेश-
हेतोर्मुदा शूलि-समाश्रयेण ।
तोपेन गोल्याऽथ प्रवासनेन
विश्वासघातेन न जातु मोक्षम् ॥

( १०२ )

आजन्म कारागृह-दण्डमाप्त्वा
समावसत् तत्र स बालसिंहः ।
पिस्तोलमाप्त्वा निज-गोलिकाभिः
मृतोऽक्षरं प्राप यशः सुवीरः ॥

( १०३ ) **( श्री देवीबख्शसिंहः )**

गोंडा-नरेशः स हि बख्शसिंहः[1]
सिंह-क्रमो भारत-भू-सुपुत्रः ।
हज़्रत्-महल्-धर्मसुतः[2] प्रवीरः
स्वदेश-स्वातन्त्र्य-कृतौ निमग्नः ॥

( १०४ )

त्यक्त्वाऽपि राज्यं स हि देशभक्तः
स्व-मातृभूमेश्चरणानुरक्तः ।
गिरिं वनं प्राप्य नेपाल-राज्यं
स्वदेशभक्तौ प्रजहौ निजाऽसून् ॥

( १०५ ) **( श्री अमरचन्द बांठिया )**

स्वातन्त्र्य-युद्धे प्रसृते प्रदेशे
जयाजिरावो[3] निज-देश-द्रोही ।
यातो बहिर्ग्वालियरस्य क्षेत्रात्
स्व-स्वामिभक्तेस्तु प्रदर्शनाय ॥

---

१. उत्तरप्रदेशे गोंडा-नरेशः श्री राजा देवीबख्शसिंहः । २. बेगम-हज़रत-महलाख्यया धर्मपुत्र इव मानितः । ३. ग्वालियरनरेशो जयाजीराव-सिन्धिया ।

( १०६ )

तत्रैव सा गैरिक-केतु-वाहिनी
संस्थापयामास निजाधिपत्यम्[1] ।
स चामरश्चन्द्रवरो[2] वदान्यः
स्वातन्त्र्य-लक्ष्म्याः परितोषणाय ॥

( १०७ )

राज्यस्य कोषाद् दश-लक्ष-रूप्यं
ददौ तु स्वातन्त्र्य-सुसैनिकेभ्यः ।
ह्यू रोज-[3]सेना पुनरेव चक्रे
स्व-शासनं ग्वालियरस्य राज्ये ॥

( १०८ )

बन्दीकृतोऽसौ अमरस्तु चन्द्रः
चतुष्पथे ग्वालियरस्य पुर्याः ।
आरोपितो निम्बतरौ तु शूलौ
कीर्त्या युतो वीरगतिं प्रपेदे ॥

( १०९ ) **( विद्रोही श्री दराबः )**

स्वातन्त्र्य-युद्धे निज-देश-भक्तौ
कारागृहे कर्णपुरस्य वीरौ ।
संप्रापतुस्तौ निधनं प्रहारैः
तद्दर्शनार्थं प्रसृतो जनौघः ॥

( ११० )

तौ द्वौ तु राजा दरियाब-चन्द्रः
सेनापतिश्चैव फकीर-शाहः ।
नार्गौर-जातौ[4] निज-राष्ट्र-युद्धे
दिवं गतौ मोक्षपदं प्रपन्नौ ॥

---

१. १४ मई १८५८ ई० तिथौ । २. ग्वालियर-राज्य-कोषाध्यक्षः श्री अमरचन्द बांठिया । ३. आंग्ल-सेनापतिः ह्यू रोजः । ४. नारगौर-निवासिनौ ।

( १११ )

फकीर-पुत्रस्तु दराब-वीरः[१]
पितुर्वधस्य प्रतिशोधनार्थम् ।
मुहुर्मुहुः आंग्ल-चमूं प्रहृत्य
तत्कोषजातम् उररीचकार[२] ॥

( ११२ )

देशद्रुहा ब्राह्मण-दानवेन
केनापि दत्तं विष-मिश्र-दुग्धम् ।
निपीय तद् देश-हिते नियुक्तः
तनुं विहायाऽक्षर-कीर्तिमाप्तः ॥

( ११३ ) ( **वनिता-वाहिनी** )

यां वाहिनीं भारत-भूमि-लक्ष्मीः
लक्ष्मी[३]र्व्यधाद् वीर-सुयोषितां तु ।
तत्रैव देशार्पित-जीवनानि
योषित्-सुरत्नानि विकासमापुः ॥

( ११४ )

झांसी-नगर्यां तु यदैव दुर्गे
ध्वस्तः प्रकोटः खर-तोप-गोलैः ।
स निर्मितस्तत्क्षणमेव रात्रौ
स्त्री-वाहिनी-घोर-परिश्रमेण ॥

( ११५ )

युद्धे तु बाई ललिता च बख्शिन्[४]
श्री सुन्दरी बाइ-वरा[५] च वीरे ।
स्वदेश-स्वातन्त्र्य-हिताय रात्रौ
ते चक्रतुः कार्यततिं मुदैव ॥

---

१. सेनापति-फकीरशाहस्य पुत्रो विद्रोही दराबः । २. अगृह्णात् । ३. झांसी-राज्ञी लक्ष्मीबाई । ४. ललिताबाई बख्शिन् । ५. सुन्दरबाई-नाम्नी ।

( ११६ )

आंग्लीं चमूं ते तु निरोद्धुकामे
यावद्दिनं तोप-प्रचालनार्थम् ।
स्थिते तु बाई-ललिता च मोती[1]
श्रिते दिवं ते वनिताग्र-गण्ये ॥

( ११७ ) ( **क्रान्ति-वैफल्य-कारणानि** )

सशस्त्र-क्रान्तिः प्रथमा यथा तु
वैफल्यमाप्ता जन-शोक-हेतोः ।
तत्कारणं वक्तुमिहास्ति शक्यं
ध्येयं विचिन्त्यं विबुधैश्च वीरैः ॥

( ११८ )

प्राचीन-शस्त्रास्त्र-प्रयोग-शिक्षा
नवाऽऽयुधानामनभिज्ञता च ।
समुद्र-शक्तेर्विरहस्तथा च
द्राक्-तार-संसूचन-विध्यभावः[2] ॥

( ११९ )

राजन्यवर्गस्य च भीरुभावो
नेपाल-पंजाब-चमू-विरोधः ।
संयोजनायामनुशासनस्य
नियन्त्रणस्यापि च दैन्यभावः ॥

( १२० )

देशद्रुहामाङ्ग्ल-समर्थनं तु
पदे पदेऽभूद् व्यवधानकारि ।
क्रान्तेर्दवाग्निः प्रसृतस्तु देशे
गुप्तोऽपि सुप्तोऽपि क्षयं न लेभे ॥



---

१. ललिताबाई बख्शिन्, मोतीबाई च । २. डाक-तार-सूचना-विभागाभावः ।

## ५२. भारतीय-क्रान्ति-वृत्तम्, ( ख ) क्रान्ति-युद्धम्
## ( १८७१ ई०–१९४७ ई० )

( उपजातिर्वृत्तम् )

( १ ) ( श्री रणजीतसिंहः )

पंजाबसिंहो रणजीतसिंहो
युद्धे मुहुर्दानव-वारणोऽसौ।
प्रधर्षयन्नाङ्ल-चमूं प्रवीरो
दिवं ययौ शाश्वत-कीर्ति-युक्तः॥

( २ ) ( कूका-विद्रोहः )

कूकेति[1] नाम्ना प्रथिता जगत्यां
या क्रान्तिरिष्टा जनता-बलेन।
स नामधारी गुरु-रामसिंहो
नेतृत्व-कार्ये सुतरां नियुक्तः।

( ३ )

'रढ'-स्थले[2] ते विपिने प्रदेशे
वीराः सहर्षं युधि युध्यमानाः।
विश्वासघातेन पराजितास्ते
बद्धा ययुः 'कावन'[3]-संमुखं च॥

( ४ )

आयुक्तकल्पः स हि दैत्यरूपो
मालेर-कोट्ला-नगरे सुबद्धान्।
तोपेन[4] सार्धं निबबन्ध वीरान्
क्षणेन ते वीरगतिं प्रयाताः॥

( ५ )

त्रयोदशाब्दं समवेक्ष्य वीरं
कावन्स्य भार्या निजगाद रोषात्।
त्वं रामसिंहं त्यज वीर-बाल!
न चेत् प्रणाशस्तव निश्चितोऽयम्॥

---

१. कूका-नामधेया नामधारिणः सिक्खजनाः। २. पटियाला-राज्य-सीमान्तक्षेत्रे रढनामक-ग्रामसमीपस्थे वने। ३. आंग्ल उपायुक्तः श्रीकावनः। ४. शतघ्न्या।

( ६ )

क्रुधा स बालः परया समेतः
काज़्नस्य कूर्चं जगृहे बलेन ।
हस्तद्वयं तस्य नरासुरेण
काज़्नेन छिन्नं, शिशुराप मृत्युम् ॥

( ७ )

मलौध-दुर्गे नव-सप्त[1] वीराः
शूलौ निबद्धास्त्रिदिवं प्रयाताः ।
स्वदेश-रक्षा-व्रतमास्थितास्ते
स्व-मृत्युकाले ननृतुर्जगुश्च ॥

( ८ ) ( श्री वासुदेव बलवन्त फड़के )

श्री वासुदेवः फड़के[2] सुवीरो
योधो महाराष्ट्रभुवः सुपुत्रः ।
रानाड-[3]वर्यस्य निशम्य घोषं
क्रान्तेर्दवाग्नि परितो बभार ॥

( ९ )

निरीक्ष्य देशस्य सुदुर्दशां तु
समीक्ष्य चैवार्थिक-शोषणं च ।
व्याख्यानदानैर्निज-लेख-कृत्यैः
आंग्लाधिपानां कुनयं बभाषे ॥

( १० )

रोमासि-[4]जात्या समवाप्य योगं
क्रान्तेर्दवाग्नि ज्वलयन् समन्तात् ।
सह्याद्रिमाश्रित्य स्वदुर्ग-भूतं
विद्रोह-कार्य-प्रथनेऽनुरक्तः ॥

---

१. षोडश । २. श्रीवासुदेव बलवन्त फड़के ( जन्म ४ नव० १८४५ ई०, मृत्युः १७ फर० १८८३ ई० ) । ३. श्री महादेव गोविन्द रानाडे । ४. रोमासी जातिः ।

( ११ )

यः कोऽपि हत्वा फड़के-शिरस्तु
दद्यात्, पुरस्कारततिं लभेत।
रिचार्ड टेम्पुल्-[1]शिरसः प्रदाने
सोऽघोषयत् लक्ष-पुरस्कृतिं तु॥

( १२ )

आंग्लास्ततस्त्रस्तहृदो हताशाः
पुणे-नगर्यां सहसा समेताः॥
निरोद्धुकामाः फड़के-वरं तु
संपैषयन् सैन्यमशेषदिक्षु॥

( १३ )

श्री दौलतो[2] मित्रवरस्तु तस्य
सैन्यैर्हतो गोलिकया वने तु।
'द्वारे'[3]सुहृत्तस्य गृहीत एष
जीवन् प्रदग्धः पुलिसालये[4]तु॥

( १४ )

श्री वासुदेवमनुसृत्य मेजर्
श्री डेनिलस्तं[5] न्यरुणत् सुग्रामे।
न्यायालये प्रस्तुत एष रुद्धो
निर्वासनाज्ञामलभिष्ट वीरः।

( १५ )

स मृत्युपूर्वं जनता-समक्षम्
उवाच—आंग्लाः सततं प्रणाश्याः।
स्याल्लोकतन्त्रं निज-देशे-मध्ये
संदिश्य स वीरगतिं प्रपेदे॥

---

१. बम्बई-राज्यपालः श्री रिचार्ड टेम्पुल-महोदयः। २. श्री दौलतरावः।
३. द्वारे-नामकोऽपरः सुहृत्। ४. रक्षि-पुरुषागारे। ५. मेजर डेनियल-नामा।

( १६ ) ( श्री चाफेकर-बान्धवाः )

श्री रेण्ड[1]-दैत्येन प्ररोषभावात्
पुण्य-स्थले[2] यद् विहितं नृशंसम् ।
तत् त्रास-कार्यं जनता-मनःसु
विक्षोभहेतुर्व्यजनिष्ट सद्यः ॥

( १७ )

चाफेकरा बन्धुवराः प्रवीणाः
कीर्त्या श्रितास्ते 'हरिपन्त'-पुत्राः[3] ।
दामोदरः, कीर्तक-बालकृष्णः,
श्री वासुदेवश्च स्वदेश-भक्ताः ॥

( १८ )

विक्टोरिया-हीरक उत्सवो यः
षष्ट्यब्द-पूर्तेः सुनियोजितोऽभूत् ।
पुण्यस्थले रेण्ड-महोदयस्य
एयर्स्ट-[4]पापस्य वधाय जातः ॥

( १९ )

दामोदरोऽसौ नर-वीर-वर्यः
स्वकीय-कार्यम् उररीचकार ।
स्वदेश-स्वातन्त्र्य-हिताय सर्वं
कृत्यं मयेदं विहितं नृशंसम् ॥

( २० )

दामोदरो बालक-बालकृष्णः
तौ प्राणदण्डेन युतावभूताम् ।
श्री वासुदेवो विनिहत्य पापं
विश्वासघातं व्यवृणोच्च मृत्युम् ॥

---

१. आंग्ल आयुक्तो रेण्ड-महोदयः । २. पुणे-नगर्याम् । ३. श्री हरिपन्त चाफेकरस्य त्रयः पुत्राः—दामोदरः चाफेकरः ( ज० २५ जून, १८६९, मृ० १८ अप्रैल १८९८ ), बालकृष्ण चाफेकरः ( ज० १८७३, मृ० १२ मई १८९९ ), वासुदेव चाफेकरः ( ज० १८८०, मृ० ८ मई १८९९ ) । ४. आंग्लः लेफ्टिनेंट एयर्स्ट-महोदयः ।

( २१ )

स्वमातृहेतोर्निज-राष्ट्र-हेतोः
प्राणार्पणं ते व्यदधुस्त्रयोऽपि ।
स्वजीवनं मातृ-पदारविन्दे
समर्प्य ते शश्वतकीर्तिमीयुः ॥

( २२ ) ( श्री वीर सावरकरः )

दामोदरोऽसौ च विनायकाख्यः[1]
सावर्कराख्या-प्रथितः स्वदेशे ।
स्वराष्ट्र-स्वातन्त्र्य-विधौ नियुक्तो
हिन्दुत्व-रक्षा-प्रवणो विजिग्ये ॥

( २३ )

स्वबाल्यकाले प्रतिजज्ञ एषः
क्रान्तेर्ध्वजम् उच्चतरं करिष्ये ।
योत्स्ये पुनर्यावदहं न मृत्युं
संप्राप्नुयां शत्रु-चमू-सुयुद्धे ॥

( २४ )

संस्थाप्य संस्थां स हि 'मित्रमेलां'[2]
क्रान्तेर्ध्वनिं सोऽप्रथयच्च देशे ।
मुक्तिर्विदेशीय-प्रशासनात् स्यात्
स्वातन्त्र्य-लाभोऽभवदेव लक्ष्यम् ॥

( २५ )

आदर्शरूपेण शिवाजि-राजं[3]
संस्थाप्य देशस्य स्वतन्त्रतायै ।
हिन्दुत्व-राष्ट्र-प्रवणा प्रवृत्तिः
तत्-क्रान्ति-कार्ये सततं प्रवृत्ता ॥

---

१. श्री विनायक दामोदर सावरकरः ( १८८३-१९६६ ई० ) । २. क्रान्ति-कारिणां संस्था मित्रमेला-नाम्नी । ३. शिवाजी-महाराजम् ।

( २६ )

संप्राप्य सोऽयं तिलकस्य[१] योगं
गणेश-[२]भ्रात्रा सह संगमं च ।
न चाऽऽङ्ग्ल-वस्त्रस्य प्रदाहमेव
इयेष साम्राज्य-विनाशमेव ॥

( २७ )

स श्यामजी-कृष्ण-[३]वरादवाप्य
वृत्तिं ययौ आंग्लभुवं प्रवीरः ।
लक्ष्यं प्रपेदे स हि देशभक्ति
स्वदेश-स्वातन्त्र्य-सुलाभमेव ॥

( २८ )

श्री श्यामजी-कृष्ण-वरस्य तत्र
श्री हर्दयालस्य[४] च बापटस्य[५] ।
संप्राप्य योगं सुगृहीत-वृत्तिः
क्रान्तेर्धुरं चारुतरम् उवाह ॥

( २९ )

स लन्दने क्रान्तिमहोत्सवस्य
आयोजयत् स्वर्ण-जयन्तिकां[६] च ।
उत्साह-भाषैर्जनता-मनःसु
हुतात्म-श्रद्धामुदबोधयच्च ॥

( ३० )

स क्रान्ति-ऐतिह्य-प्रकाशनार्थं
क्लेशाननेकानसहिष्ट वीरः ।
प्रकाशितं पुस्तकमाङ्ग्ल-देशे
आंग्लाधिपैर्रोधितमेव रोषात् ॥

---

१. श्री लोकमान्य-तिलकस्य । २. सावरकराग्रजो गणेश-सावरकरः । ३. श्री श्यामजी कृष्ण बर्मा । ४. श्री लालाहरदयालः । ५. श्री पांडुरंग महादेव बापटः । ६. १० मई १९०७ ई० तिथौ ।

( ३१ )

गणेश-सावरकरमत्र देशे
श्रीजैक्सनो[1] दण्डमदात् सुघोरम् ।
अनन्त-कन्हेर-वरस्तु[2] तस्य
वधं व्यधाद् नाट्य-सभागृहे च ।

( ३२ )

श्री कृष्णपन्तश्च[3] विनायकश्च
अनन्त-कन्हेर-वरः त्रयस्तु ।
वधाऽपराधे विनिगृह्य शूलौ
आरोपितास्ते[4] निज-देश-भक्ताः ॥

( ३३ )

स पेरिसाद् लन्दनमाजगाम
खिन्नो विषण्णो निगृहीत एषः ।
संकूर्द्य पोताद् जलधिं प्रतीर्य
फ्रांसावनिं प्राप स वीर-वर्यः ॥

( ३४ )

आंग्लैः पुनः स निगृहीत एषः
प्रवास-दण्डात् प्रहितोऽण्डमानम्[5] ।
दीर्घं समाप्यैव प्रवासदण्डं
मुक्तः पुनर्भारतमाजगाम ॥

( ३५ )

आजीवनं देशहिताय तप्त्वा
क्रान्तेर्धुरं देश-विदेश-मध्ये ।
उवाह स भारत-भू-सुपुत्रो
यशोऽक्षरं प्राप च देशभक्तः ॥

---

१. आंग्लशासकः श्री जैक्सनः । २. अनन्त कन्हेरे-नामकः ३. श्री कृष्णजीपन्त कर्वे, श्री विनायक देशपांडे, श्री अनन्त कन्हेरे च । ४. १९ अप्रैल १९१० ई० तिथौ । ५. अण्डमान-द्वीपम् ।

( ३६ ) **( श्री वारीन्द्रकुमार घोषः )**

श्री कृष्णघन् घोष[१]-सुतौ वदान्यौ
वारीन्द्रघोषो[२] ह्यरविन्दघोषः ।
सुतौ स्वदेश-व्रतमास्थितौ तौ
स्वराज्य-हेतोर्ददतुः स्वजीवम् ॥

( ३७ )

लार्ड्-कर्जनादिष्ट[३]-सुबङ्ग-भङ्गम्
उद्दिश्य देशे प्रससार रोषः ।
स्वदेशि-आन्दोलन[४]मत्र वृत्तं
स्वराज्य-प्राप्तिर्ववृते च लक्ष्यम् ॥

( ३८ )

'युगान्तरं' पत्रमसौ प्रकाश्य
प्रासारयत् क्रान्ति-दवाग्निमेतम् ।
छात्रा युवानो निजदेश-भक्त्या
वारीन्द्रघोषस्य दलं प्रविष्टाः ॥

( ३९ )

वारीन्द्र उल्लासकरः उपेन्द्रो[५]
निर्वासनं प्रापुरिमे समेऽपि ।
स्वयातनानां विवृतिः समस्ता
प्रकाशितैभिर्नरपुंगवैस्तु ॥

( ४० ) **( श्री अरविन्द घोषः )**

यश्चारविन्दो नर-वीर-घोषः
संप्राप्य मुक्तिं निगृहीत एषः ।
स्वीयाश्रमे पांडिचरी-प्रदेशे
अध्यात्म-योगाऽऽश्रयणे प्रवृत्तः ॥

---

१. डॉ० कृष्णघन घोषः । २. वारीन्द्र कुमार घोषः, अरविन्द घोषश्च । ३. श्री लार्ड कर्जनः । ४. स्वदेशी आन्दोलनम् । ५. वारीन्द्र-कुमारघोषः, उल्लासकरदत्तः, उपेन्द्रनाथ बनर्जी च ।

( ४१ ) ( श्री खुदीराम बोसः )

वारीन्द्र-निर्देशमवाप्य खुदी-
रामो[१] वसुर्वीर-प्रफुल्ल-चाकी[२]।
श्री किंग्सफोर्ड[३] तु निहन्तुकामौ
मुदा प्रवृत्तौ नृ-पशोर्विनाशे ॥

( ४२ )

मुजफ्फरं प्राप्य पुरं[४] द्वयं तत्
चिक्षेप याने बममेकमेव ।
कनेडि[५]-योषिद्-द्वयमाप मृत्युं
न किंग्सफोर्डो मृतिमाजगाम ॥

( ४३ )

प्रफुल्ल-वर्यो निगृहीत एषः
स्वकीय-गोल्याऽऽत्म-विनाशमाप ।
रामः खुदी[६] चापि गृहीत एव
शूलौ मृतेर्दण्डमवाप बालः ॥

( ४४ )

शूलौ सहर्षं मृतिमाप वीरः
शवं तु तस्यानुययौ जनौघः ।
लक्षाधिको, भस्म निधाय मूर्ध्नां
रक्षामणिं[७] तस्य व्यधत्त प्रेम्णा ॥

( ४५ )

'रामः खुदी' प्राप यशोऽक्षरं सः
श्रद्धाञ्जलिं प्राप च देशभक्तैः ।
ग्रामे नगर्यां सकलेऽपि बङ्गे
तन्नाम-ज्योतिः प्रसृतं समन्तात् ॥

---

१. श्री खुदीराम बोसः ( जन्म ३ दिस० १८८९ ई०, मृत्युः ११ अग० १९०८ ई० )। २. श्री प्रफुल्ल चाकी। ३. आंग्लाधिकारी किंग्सफोर्डः। ४. मुजफ्फरपुरम्। ५. कनेडी-परिवारस्य स्त्रीद्वयम्। ५. श्री खुदीरामः। ७. ताबीज इति।

( ४६ ) **( श्री रासविहारी बोसः )**

शूराग्रणीः रासविहारिबोसो
विनोद-वर्यस्य[1] सुतः प्रवीणः।
स्वातन्त्र्य-हेतोर्निज-भारतस्य
क्रान्तेर्वनाग्निं परितो बभार ॥

( ४७ )

सोऽयोजयत् क्रान्तिकृतां समूहं
स्वदेशभक्तिं प्रददे जनेषु।
समर्प्य देशाय स्वजीवनं सः
प्राज्वालयत् क्रान्ति-सुवह्निमिष्टम् ॥

( ४८ )

सोऽमीरचन्द्रस्य[2] सुयोगमाप्त्वा
लाला हनूमन्त-सहाय[3]मिष्टम्।
स्व-क्रान्ति-कार्य-प्रथनेऽनुरक्तः
स्वदेश-स्वातन्त्र्यमुवाच लक्ष्यम् ॥

( ४९ )

लाला हनूमन्तसहाय-वर्यो
ददौ स्वदेशाय तनुं धनं च।
अस्थापयद् राष्ट्रिय-ज्ञानपीठं
क्रान्तेः सुशिक्षां प्रददे युवभ्यः ॥

( ५० )

दिल्ल्यां शुभः पंचम-जार्ज-द्वार-
महोत्सवः प्रववृते समन्तात्।
तदा तु हार्डिंज-वरे[4] क्रुधैव
क्षिप्तो बमश्चांदनि-चौक[5]-मध्ये ॥

---

१. श्री विनोदविहारी बोस-सुतः श्री रासविहारी बोसः ( जन्म २५ मई १८८६, मृत्युः २१ जन० १९५५ ई० )। २. मास्टर अमीरचन्द्रः। ३. लाला हमुमन्तसहायः। ४. लार्ड हार्डिंजो वायसरायः। ५. चांदनीचौकः।

( ५१ )

वसन्तको[1] रास-विहारि-ब्रोसो
भागं न्यधातां विषमे तु कृत्ये।
वसन्तको बालमुकुन्द-वर्यः[2]
तदर्थमासौ प्रमुदैव शूलिम्॥

( ५२ )

शस्त्रास्त्रमाप्तुं प्रहितो विदेशं
विहारि-वर्यो निजदेशभक्तैः।
जापानमाप्त्वा स प्रचार-कार्ये
नित्यं नियुक्तो निज-भाष-लेखैः॥

( ५३ ) ( **श्री शचीन्द्रनाथ सान्यालः** )

शचीन्द्र-सान्याल-[3]वरोऽत्र देशे
नेतृत्व-कार्यं व्यदधाद् धुरीणः।
वाराणसी-काण्ड-गृहीत एषः
प्रवासितो ह्यण्डमनं तु द्वीपम्॥

( ५४ )

मुक्तः पुनः स विदुषां वरेण्यः
काकोरि-काण्डे[4] निगृहीत एषः।
कारागृहे क्लेश-ततिं विषह्य
क्षयेण[5] प्राप निधनं प्रवीरः॥

( ५५ ) ( **श्री लाला हरदयालः** )

श्री हर्दयालो[6] विदुषां वरिष्ठो
गौरीदयालस्य[7] सुतो वदान्यः।
आक्स्फोर्डमाप्त्वैष सुछात्रवृत्त्या
स्वदेशभक्त्याऽध्ययनं जहौ सः॥

---

१. श्री वसन्तकुमार विश्वासः। २. भाई बालमुकुन्दः। ३. श्रीशचीन्द्रनाथ सान्यालः। ४. काकोरी-षड्यन्त्र-काण्डे। ५. क्षयरोगेण। ६. श्री लाला हरदयालः ( जन्म १४ अक्टू० १८८४, मृ० ४ मार्च १९३९ ई० )। ७. पिता-श्रीगौरीदयाल माथुरः।

( ५६ )

श्री श्यामजी-कृष्ण[१]-सुयोगमाप्त्वा
क्रान्तेः शिखां सोऽप्रथयद् विदेशे ।
अमेरिकायां विविधे प्रदेशे
प्रासारयत् क्रान्ति-दवाग्निमेषः ॥

( ५७ )

मन्त्रित्वमास्थाद् गदरे दले[२] सः
प्राकाशयत् पत्र-सुपत्रिकाश्च ।
आंग्लाधिपत्यमपहर्तुकामः
क्लेशानशेषानसहिष्ट वीरः ॥

( ५८ )

शर्मण्यदेशेन[३] सुयोगमाप्त्वा
आंग्ल-क्षयं स चकमे तु युद्धे ।
शर्मण्य-देशस्य पराजयेन
स्वाधीनताऽऽशा क्षयमेव याता ॥

( ५९ )

अमेरिकायां निधनं प्रवासे
अवाप्य स वीरगतिं प्रपेदे ।
ज्ञानेन स्मृत्या निज-देश-भक्त्या
वीराग्रणीः शाश्वत-कीर्तिमाप ॥

( ६० ) **( श्री श्यामजीकृष्ण वर्मा )**

स श्यामजी-कृष्ण-वरो[४] वदान्यः
स्वदेश-भक्तो विदुषां वरेण्यः ।
यतेर्दयानन्द-वरस्य शिष्यः
क्रान्तेर्दवाग्निं सततं ददाह ॥

---

१. श्रीश्यामजीकृष्णवर्मा । २. गदर-नामके दले । ३. जर्मनी-देशेन । ४. श्रीश्यामजीकृष्णवर्मा ( जन्म ४ अक्टू० १८५७, मृ० ३१ मार्च १९३० ई० ) ।

( ६१ )

प्रसार्य स वैदिकधर्म-ज्योतिः
प्रसार्य क्रान्तेर्दहनं विदेशे ।
आंग्लेऽपि देशे धृत-क्रान्ति-ज्योतिः
सावर्करादेः सहयोगमाप ॥

( ६२ )

संस्थाप्य स 'भारत-गेह'-[1]मत्र
ग्रन्थाननेकान् व्यलिखद् विपश्चित् ।
स्वातन्त्र्य-हेतोर्बलिमेष दत्त्वा
लोकेऽक्षयां कीर्तिमवाप वीरः ॥

( ६३ ) ( **श्री गेंदालाल दीक्षितः** )

श्री दीक्षितः[2] क्रान्तिकृतां वरिष्ठः,
अवाप्य स आर्यसमाज-शिक्षाम् ।
स्वातन्त्र्य-हेतोर्निज-देशे-भूमेः
प्राणार्पणेन सततं प्रवृत्तः ॥

( ६४ )

संस्थाप्य संघं स शिवाजि-[3] नाम
ऐच्छत् स्वदेशस्य विमुक्तिमेताम् ।
संप्राप्य स चम्बल-क्षेत्रमेव
स्वदेश-मुक्त्यै समुवाच दस्यून् ॥

( ६५ )

स दस्यु-संघस्य सहायमाप्त्वा
कोषानलुण्ठद् विविधे प्रदेशे ।
स्वातन्त्र्य-हेतोरनुभूय काराम्
अहर्निशं देशहिते नियुक्तः ॥

---

१. लन्दन-नगरे 'इण्डिया हाउस' इति । २. श्री गेंदालाल दीक्षितः ( जन्म २० नव० १८८८ ई०, मृत्युः २० दिस० १९२० ई० ) ।
३. शिवाजी-समितिः ।

( ६६ )

विश्वासघातेन निरुद्ध एषः
कारागृहात् कूट-प्रयोग- मुक्तः ।
दिल्ल्यां सुरुग्णः समवाप मृत्युम्
अवाप च वीरगतिं सुवीरः ॥

( ६७ ) ( श्री मानवेन्द्रनाथ रायः )

श्री मानवेन्द्रो[1] विदुषां वरिष्ठः
क्रान्तिप्रियः षोडश-भाष-विज्ञः[2] ।
संप्राप्य रूसं विविधांश्च देशान्
क्रान्तेः पताकां परितो दधार ॥

( ६८ )

लेनिन्-सुयोगेन स्वदेश-मुक्त्यै
रूस-प्रदेशे अयतिष्ट नित्यम् ।
विलिख्य लेखान् विविधांश्च ग्रन्थान्
स्वातन्त्र्य-युद्धेऽक्षरकीर्तिमाप ॥

( ६९ ) ( श्री कन्हाईलाल दत्तः )

तत्रैव श्री दत्त-कन्हाइ-लालः[3]
कृष्णोपमः क्रान्ति-समर्थकोऽभूत् ।
स्व-मातृ-दुःखान्यपहर्तुकामः
स्वदेश-रक्षा-व्रतमेव वव्रे ॥

( ६० )

बङ्गीयबालो नितरां सुशीलः
परोपकार-व्रतमास्थितश्च ।
धैर्ये समुद्रः सुकृतौ गिरिश्च
कर्तव्यमार्गे धृत-शेष-शक्तिः ॥

---

१. श्री मानवेन्द्रनाथ रायः ( मूलनाम-नरेन्द्र भट्टाचार्यः ) ( जन्म १८९२ ई०, मृत्युः २४ जन० १९५४ ई० । २. षोडश-भाषा-वेत्ता । ३. श्री कन्हाईलाल दत्तः ( जन्म १८८७ ई०, मृत्युः १० नव० १९०८ ई० ) ।

( ७१ )

स विप्लवाग्निं सकलेऽपि देशे
प्रासारयत् प्राणपणेन नित्यम् ।
भागीरथं तस्य प्रयास-जातं
प्राज्वालयद् विप्लव-दाव-वह्निम् ॥

( ७२ )

सत्येन्द्र-नामा[1] वसुरस्य मित्रं
प्रचार-कार्ये धृतिमाबबन्ध ।
नरेन्द्र[2]-गोस्वामिनमत्र पापं
विश्वासघातं चकमे निहन्तुम् ॥

( ७३ )

रुग्णालये प्राप्य नरेन्द्रमेतं
प्रद्रुत्य पापं निजघान सद्यः ।
बद्धोऽभियुक्तो निज-कार्य-जातं
स स्वीचकार वर-वीर-कान्तिः ॥

( ७४ )

सत्येन्द्र-वर्योऽपि नरेन्द्र-नाशे
साहाय्यमिष्टं व्यदधात् सुधीरः ।
स चाभियुक्तो निज-प्राण-दण्डं
मुदा प्रहृष्टो वरमेव मेने ॥

( ७५ )

कन्हाइ-वर्यस्तु यदैव शूलिम्
आरोपितो देह-विनाश-हेतोः ।
मुदा युतः स्थौल्य-समुद्भवेन
स ववृधे षोडश-पौण्ड[3]-मात्रम् ॥

---

१. सत्येन्द्रकुमार वसुः ।    २. नरेन्द्रगोस्वामी विश्वासघातकः ।
३. १६ पाउन्ड-मितम् ।

( ७६ )

गौराङ्ग एको मृत-देहमेतं
प्रेक्ष्याब्रवीत् संहतमिष्ट-वर्गम् ।
एतादृशा वीरवरा युवानः
स्वदेश-कीर्त्यै जनिमाभजन्ते ॥

( ७७ )

विलाप-लेशोऽपि च नेह कार्यः
प्रहर्ष-हेतुः अयमस्य मृत्युः ।
न जन्म मृत्युं कति संलभन्ते ?
कीर्त्या श्रितो यो ह्यमरः स एव ॥

( ७८ )

चितां श्रितो भस्मचयं प्रपेदे
कीर्त्या श्रितो देवपदं च लेभे ।
तद्-भस्म-जातं शिरसा प्रणम्य
सर्वैर्गृहीतं मणि-भस्म-तुल्यम् ॥

( ७९ )

कन्हाइ-लालस्य शवं समीक्ष्य
य उत्सवोऽभूत् सकलेऽपि देशे ।
स आंग्ल-लोकस्य विनाशरूपः
समुद्गतः पुच्छल-तार-भूतः ॥

( ८० ) ( **श्री सत्येन्द्रकुमारो वसुः** )

सत्येन्द्रवर्यः[१] स च वीरवन्द्यः
शूलिं प्रपन्नः प्रमुदा ननर्त ।
कन्हाइ-वद् वीरगतिं प्रपन्नो
यशःशरीरेण धृतोऽत्र नित्यम् ॥

---

१. श्री सत्येन्द्रकुमार-वसुः । ( मृत्युः २१ नव० १९०८ ई० ) ।

( ८१ )

कन्हाइ-लालस्य शवोत्सवं तं
संप्रेक्ष्य आंग्ला भयमेव जग्मुः ।
सत्येन्द्र-वर्यस्य शवोत्सवाय
भयाकुलैर्नानुमतिः प्रदत्ता ॥

( ८२ ) ( **श्रीमदनलाल ढींगरा** )

स ढींगरा[1] देश-व्रते नियुक्तः
आंग्लं प्र-देशं समवाप्य धीरः ।
सर् कर्जनं वायलि[2]-मत्र दुष्टं
तं भारताख्ये भवने[3] जघान ॥

( ८३ )

शूलिं श्रितः स निजगाद हृष्टो
भूयो भवेद् भारत भूमि-भागे ।
मज्जन्म पुण्यं, निज-मातृ-हेतोः
समर्पयेयं सततं शरीरम् ॥

( ८४ )

या देश-पूजा परमेश-पूजा
कृष्णार्चना सा निज-राष्ट्र-सेवा ।
स्व-मातृ-हेतोर्यदिहार्प्यते तद्
देवार्चनं विद्धि सुकीर्ति-रम्यम् ॥

( ८५ ) ( **श्री अमीरचन्द्रः** )

अमीरचन्द्रः[4] कृतिनां वरिष्ठः
प्राध्यापकः क्रान्तिकृतां धुरीणः ।
शूलिं श्रितो मोदयुतस्तु रज्जुं
कण्ठे स्वहस्ताद् निबबन्ध धीरः ॥

---

१. श्री मदनलाल ढींगरा ( मृत्युः १७ अगस्त १९०९ ई० ) । २. सर कर्जन वायली, भारतमन्त्रिणः सहायकः । ३. इण्डिया हाउस-नामके भवने । ४. मास्टर श्री अमीरचन्द्रः ( जन्म १८६९ ई०, मृ० ८ मई १९१५ ई० ) ।

( ८६ )

पुत्रीकृतोऽसौ सुलतानचन्दो[१]
विश्वासघाती निज-देश-शत्रुः।
उद्घाटय वृत्तं धन-लिप्सयाऽसौ
जज्ञे पितुः प्राण-विनाश-हेतुः॥

( ८७ ) ( श्री अवधविहारी )

अवधविहारो[२] सुकृताचारी
क्रान्ति-सुधा-रस-पान-प्रमोदी।
आंग्ल-राज्य-संहार-सुकेतुः
शूलिमवाप्य मुदा मृतिमाप॥

( ८८ ) ( श्री भाई बालमुकुन्दः )

औरंगजेबस्य कुराज्य-काले
शूलिं श्रितस्तेगबहादुरो[३]ऽपि।
तेनैव सार्धं क्रकचेन भिन्नो
मृतिं ययौ श्री मतिदास[४]-वर्यः॥

( ८९ )

तद्-वंशजा भाइ[५]-उपाधियुक्ताः
बभूवुरेते निज-देश-भक्ताः।
तद्-वंशजो बालमुकुन्द[६]-वर्यः
स्वदेश-हेतोः प्रददौ स्व-देहम्॥

( ९० )

श्री हारडिंजस्य[७] वधाय दिल्ल्यां
विस्फोटनं यज्जनितं बमेन।
तत्कारणं बालमुकुन्द-वर्यः
शूलिं श्रितो मोद-भरान्ननर्त॥

---

१. श्री अमीरचन्द्रस्य दत्तकपुत्रः ( कुपुत्रः )। २. श्री अवधविहारी ( जन्म १८८९ ई०, मृत्युः ८ मई १९१५ ई० )। ३. सिक्खनेता श्री गुरु तेगबहादुरः। ४. श्री भाई मतिदासः। ५. भाई ( भ्राता )। ६. श्री भाई बालमुकुन्दः ( जन्म १८८९ ई०, मृत्युः ८ मई १९१५ ई० )। ७. वायसरायः लार्ड हार्डिंज-महोदयः।

( ९१ )

भार्या सती रामरखी[1]-ति ख्याता
आकर्ण्य पत्युर्मरणं तु शूलौ।
हृष्टा मुदा भर्तृ-समागमाय
सतीत्व-भावं[2] प्रययौ स्वगेहे॥

( ९२ ) ( श्री वसन्तकुमार विश्वासः )

वसन्त-वर्यो[3] गुण-शौर्य-धुर्यः,
पाञ्चाल-देशे कृत-क्रान्ति-कृत्यः।
लाहौर-पुर्यां बम-पात-हेतोः
शूलिं श्रितो देशहिताय सद्यः॥

( ९३ ) ( श्री भाई भागसिंहः )

श्री भागसिंहो[4] धृतिमद्वरिष्ठः
स्वदेश-रक्षार्पित-जीवनोऽसौ ।
कानाड-देशं[5] समवाप्य तत्र
स्वदेश-स्वातन्त्र्य-कृतौ नियुक्तः॥

( ९४ )

संसह्य कष्टं विविधं च घोरं
धृतिं जहौ नैव स्वदेश-भक्तः।
द्वारे गुरोः[6] पूजन-तत्परोऽसौ
पिस्तौल-घातेन[7] हतो वरेण्यः॥

( ९५ ) ( श्री भाई वतनसिंहः )

तन्मित्रवर्यो वतन-प्रसिंहः[8]
सिंह-क्रमः शूर-पराक्रमोऽसौ।
श्री भागसिंहेन सहैव घाताद्
दिवं ययौ गोलि-सुविद्ध-देहः[9]॥

---

१. श्री भाईबालमुकुन्दस्य भार्या रामरक्खी। २. प्राणत्यागं चक्रे। ३. श्री वसन्तकुमार विश्वासः ( मृ० १९१४ ई० )। ४. भाई भागसिंहः ( ज० १८७८, मृ० १९२२ ई० )। ५. कैनाडा-देशः। ६. गुरुद्वारा-स्थले। ७. बेलासिंह-कृत-पिस्तौल-गोलिकया। ८. भाई वतनसिंहः ( मृ० १९२२ ई० )। ९. पिस्तौलस्य सप्तगोलिकाभिर्विद्धः।

( ९६ ) ( **श्री मेवासिंहः** )

श्री मेव-सिंहः[१] करुणार्द्र-चित्तः
कानाड-देशे स्वजना[२]ऽर्ति-खिन्नः ।
सेहे न रोषं स्वजनाऽवमानं
स क्रान्तिमिष्टां व्यवृणोद् मुदैव ॥

( ९७ )

हाप्किन्सनं[३] शासकमत्र दुष्टं
न्यायालये गोलिकया जघान ।
आत्माऽर्पणाऽऽविष्कृत-धैर्य-सिन्धुः
मुदाऽऽश्रयत् शूलिममोघ-वीर्यः ॥

( ९८ )

स्वदेश-हेतोर्निज-धर्म-हेतोः
प्राणार्पणं मे जन-ताप-शान्त्यै ।
न भारतीया अवमानिताः स्युः
कानाड-देशे इति मे प्रणाशः ॥

( ९९ )

शवोत्सवस्तस्य कनाड-देशे
अभूतपूर्वं गरिमाणमाप ।
स भारतीयाऽऽङ्ग्ल-जनैः समेतैः
प्रशंसितो देवपदं प्रपेदे ॥

( १०० ) ( **श्री पं० काशीरामः** )

श्री काशिरामो[४] गुणिनां वरिष्ठो
देशार्पित-श्रीः परमार्द्र-चेताः ।
सप्तर्षिवत् सप्त-सुहृद्भिरिद्धः
शूलिं श्रितो रक्षि-विनाश-हेतोः ॥

---

१. श्री मेवासिंहः ( मृ० ११ जन० १९१५ ई० ) । २. भारतीयानाम् ।
३. प्रवास-विभागे मुख्याधिकारिणं हाप्किन्सन-महोदयम् । ४. श्री पं० काशीरामः ( ज० १८८१ ई० ), पिता-श्रीगंगारामः ।

( १०१ )

स तातमेवं निजगाद खिन्नं
मद्-देह-नाशो निज-देश-हेतोः ।
स्वदेश-भक्ताऽऽर्य-पदाऽरविन्दे
मम स्थितिः स्यादिति कामयेऽहम् ॥

( १०२ ) ( **श्री गन्धार्सिहः** )

श्रीगन्धर्सिहो[1] बलिनां वरिष्ठः
प्रज्वाल्य क्रान्तेर्दहनं समन्तात् ।
स्व-सप्त-मित्रैः सह देश-हेतोः
शूलिं श्रितो हर्ष-प्रकर्ष-हृष्टः ॥

( १०३ ) ( **श्री करतारसिंहः** )

कर्तारसिंहो[2] रिपु-नाग-सिंहः
सिंह-क्रमः सिंह-समान-शक्तिः ।
अमेरिकां प्राप्य स्वदेशजानां
संघं व्यधात् शक्ति-समुच्चयार्थम् ॥

( १०४ )

स 'विप्लवं'[3] 'विप्लव-घोष'[4]-नाम्ना
प्राकाशयद् ग्रन्थततिं विदेशे ।
अमेरिकायां स त्रिवर्ण-केतुं
प्रासारयद् भारत-गौरवाय ॥

( १०५ )

'स्वदेश-भक्त्यर्पित-जीवितेभ्यः
पदे पदे प्राण-विनाश एव ।
न तत्र शान्तिर्न सुखं धनं वा
यशोऽक्षरं केवलमेव लभ्यम्' ॥

---

१. भाई रामसिंहापरनामा श्री भाई गन्धासिंहः ( मृ० १९१६ ई० ) । २. सरदार मंगलसिंहस्य सुतः श्री सरदार करतारसिंहः ( ज० १८९६, मृ० नव० १९१६ ई० ) । ३. गदर-नामकं समाचारपत्रं ग्रन्थं च । ४. 'गदर दी गूंज' इति ग्रन्थः ।

( १०६ )

इत्थं जपन् सोऽयममोघ-शक्तिः
स्वातन्त्र्य-हेतोर्भरतावनेस्तु ।
आंग्लाधिपानां समवेक्ष्य क्रूरं
कृत्यं तु चित्तं लभते न शान्तिम् ॥

( १०७ )

स पिंगले-रासविहारि-सान्याल्[१]-
सुहृद्वराणां समवाप संगम् ।
क्रान्तेः प्रसारे धन-संग्रहे च
रात्रिन्दिवं ते निरताः समेऽपि ॥

( १०८ )

संप्राप्य युद्धं सरगोध[२]-क्षेत्रे
बन्दीकृतोऽसौ रिपुभिः समस्तैः ।
न्यायालये सर्वमुदारभावात्
कृतं स्वकृत्यं निजगाद हर्षात् ॥

( १०९ )

'प्रवासनात् शूलिमहं वरं वृणे
यतो हि सद्यो मम देह-मोक्षः ।
पुनः पुनः प्राप्य जनिं स्वदेशे
शूलिं श्रयेयम्' इति मेऽभिलाषः ॥

( ११० )

'स्वदेश-भक्तैः प्रथितं जगत्यां
देशार्थ-मृत्युः परमो हि मृत्युः ।
स मोक्ष-मार्गः स हि धर्म-मार्गः
स राज-मार्गः स च क्रान्ति-मार्गः' ॥

---

१. श्री वी० जी० पिंगले, रासविहारी वसुः, शचीन्द्रनाथ सान्यालश्च ।
२. सरगोधा-स्थले ।

( १११ )

एवं वदन् क्रान्ति-समिद्ध-चेताः
अष्टादशाब्दो नर-वीर-वर्यः ।
गायन् मुदा भारत-मातृ-गीतं
शूलिं श्रितो मोक्षमवाप सद्यः ॥

( ११२ ) ( श्री. वी. जी. पिंगले )

श्री पिंगले[1] पिंगल-दाव-वह्निः
पुण्य-स्थले[2] प्राप्य शुभं स्वजन्म ।
संप्राप्य शिक्षां तु अमेरिकायां
स्वातन्त्र्य-युद्धे प्रमुदा प्रवृत्तः ॥

( ११३ )

प्रभ्रम्य देशे शुभ-दाव-वह्निं
प्रसारयामास पुरे च सैन्ये ।
क्रान्तेर्धुरं पञ्चनदे गृहीत्वा
प्राप्तः पुनर्मरठ-सैन्य-क्षेत्रे ॥

( ११४ )

संप्राप्य सैन्यान् दशभिर्बमैः स
विद्रोह-वह्निं प्रदिधक्षुरेव[3] ।
विश्वासघातेन विरुद्ध एष
शूलौ मृतिं मोदपरः प्रपेदे ॥

( ११५ )

शूलिं श्रितः प्राह–'प्रभो, ममेयं
स्वातन्त्र्ययुक्ता भरतावनिः स्यात् ।
कृतं मया सैनिक-कृत्यमेतत्
प्रभो प्रसीदेति' दिवं ययौ सः ॥

---

१. श्री विष्णुगणेश पिंगले ( जन्म जन० १८८८, मृ० १७ नव० १९१५ ई० ) । २. तालेगाँव ( पूना ) । ३. प्रज्वालयितुकामः ।

( ११६ ) ( **श्री सूफी अम्बाप्रसादः** )

अम्बाप्रसादः[१] स हि सूफि-वर्यो
देशोद्धृतौ त्यक्त-समस्त-वित्तः ।
अधीत्य चाऽऽर्यां यवनीं च भाषां
नेपाल-ईरान-भ्रमं चकार ॥

( ११७ )

लेखे पटुर्दक्षिण-हस्त-हीनः
पादेन लेखे प्रवणः सुवाग्मी ।
ईरान-क्रान्तौ मृति-दण्डमाप्त्वा
समाधिना वीर-गतिं प्रपन्नः ॥

( ११८ ) ( **श्री सोहनलाल पाठकः** )

श्री पाठकः[२] क्रान्तिकृतां वरेण्यः
प्रासारयत् क्रान्ति-सुघोषमेषः ।
देशे विदेशे 'गदर'[३]-ध्वनिं सः
अघोषयत् प्राण-पणेन वीरः ॥

( ११९ )

स सैन्य-विद्रोहमवाप्तुकामः
अमेरिका-थाइ[४]-भुवं प्रपेदे ।
विश्वासघातेत स ब्रह्मदेशे[५]
धृतः श्रितः शूलिमवाप कीर्तिम् ॥

( १२० ) ( **श्री बलवन्तसिंहः** )

वीराग्रणीः श्री बलवन्तसिंहः[६]
अदम्य-शक्तिर्बुधसिंह-पुत्रः ।
अमेरिकायां गदरं दलं स
संगृह्य क्रान्तेर्दहनं ददाह ॥

---

१. श्री सूफी अम्बाप्रसादः ( जन्म १८५८ ई०, मृ० १९१५ ई० ) । २. श्री सोहनलाल पाठकः ( जन्म ७ जन० १८८३, मृ० १० फर० १९१६ ई० ) । ३. विप्लवः । ४. थाईलैंडः । ५. बर्मा-देशे । ६. श्री बलवन्तसिंहः ( जन० १८८३, मृ० १९१६ ई० ) ।

( १२१ )

ह्वाप्किन्सनस्य वध-काण्ड-हेतोः
लाहौर-काण्डे च धृतः प्रवीरः ।
शूलौ मृतिं प्राप्य स क्रान्ति-मूर्तिः
यशोऽक्षरं प्राप स्वदेश-भक्तः ॥

( १२२ ) ( **डा० मथुरासिंहः** )

स डाक्टरः श्री मथुरा-प्रसिंहो[1]
रसायनज्ञो हरिसिंह-पुत्रः ।
अमेरिकायां गदरं प्रचार्य
बभ्राम चीनादि-अनेकदेशान् ॥

( १२३ )

जारस्य[2] लब्धुं च सहायमेष
रूसं गतो देश-स्वतन्त्रतायै ।
रुद्धश्च बद्धः समवाप शूलिं
सिक्ख-प्रवीरोऽक्षयकीर्तिमाप ॥

( १२४ ) ( **श्री बन्तासिंहः** )

बन्तासिँहो[3] वीर-वर-प्रयोधो
बूटासिँहस्यैष सुतो वरिष्ठः ।
पंजाब-सैन्यस्य भयप्रदोऽसौ
अमेरिकां चीनभुवं च यातः ॥

( १२५ )

चन्दासिँहं देशद्रुहं निहत्य
विश्वासघातेन धृतः प्रवीरः ।
आहूय वीरान् निज-देश-भक्त्यै
शूलिं श्रितः कीर्तिमवाप शश्वत् ॥

---

१. श्री डॉ० मथुरासिंहः ( ज० १८८३, मृ० २७ मार्च १९१७ ई० ) ।
२. रूस-शासनाध्यक्षो ज़ार-महोदयः । ३. श्री बन्तासिंहः ( ज० १८९० ई० ) ।

( १२६ ) ( श्री यतीन्द्रनाथ मुकर्जी )

उमेशचन्द्रस्य सुतो वदान्यो
यतीन्द्रनाथो[१] नर-वीर-योधः ।
क्रान्तेः पताकां स प्रसार्य बङ्गे
विद्रोह-कार्ये सततं प्रवृत्तः ॥

( १२७ )

अमेरिकादेः समवाप्य शस्त्रं
बालेश्वरे[२] योध-गृहीत एषः ।
मुदैव संयुध्य सशस्त्र-योधैः
कीर्तिं श्रितो वीरगतिं प्रपेदे ॥

( १२८ ) ( श्री नलिनीकान्त बागची )

स बागची श्री नलिनी-प्रवीरः[३]
सशस्त्र-क्रान्तिं प्रतिबोध्य बङ्गे ।
सशस्त्र-सैन्यैः क्षत एष वीरः
कीर्त्या युतोऽसून् प्रजहौ सुयोधः ॥

( १२९ ) ( अन्ये )

अन्ये च शूरा बहवः प्रवीराः
क्रान्तिं श्रिता वीरगतिं प्रपन्नाः ।
श्री सन्तसिंहो वरयामसिंहः
श्री कर्मसिंहश्च दिलीपसिंहः ॥

( १३० )

श्री नन्दसिंहो गुणि-रामसिंहः
श्री भानसिंहः अरुण-प्रसिंहः ।
श्री कृष्णसिंहो हरिनामसिंहः
श्री भक्तसिंहस्य[४] सखाय एते ॥

---

१. श्री यतीन्द्रनाथ मुकर्जी ( जन्म ८ दिस० १८८०, मृ० १० सित० १९१५ ई० ) । २. बालेश्वरः ( बालसोर, उड़ीसा ) । ३. श्री नलिनीकान्त बागची ( जन्म १८९६ ई०, मृ० १६ जून १९१८ ई० ) । द्रष्टव्यः—सरदार भगतसिंह-कृतः 'मेरे क्रान्तिकारी साथी' ग्रन्थः, पृष्ठ ८१-१२६ ।

( १३१ ) ( श्री रामप्रसाद बिस्मिलः )

रामप्रसादः[१] कृतिनां वरिष्ठो
बिस्मिल्-उपाख्या-प्रथितः स्वदेशे ।
स सोमदेवात् समवाप्य मन्त्रं
स्वातन्त्र्य-मन्त्रं सततं जजाप ॥

( १३२ )

मुर्लीधरस्यैष[२] सुतो हुतात्मा
संप्राप्य चैवाऽऽर्यसमाज-संगम् ।
सुदीक्षितश्चाऽऽर्य-विधौ सदैव
स्वदेश-स्वातन्त्र्यमियेष नित्यम् ॥

( १३३ )

अश्फाक[३]-वर्येण विधाय मैत्रीम्
आदर्शमस्थापयदेष शश्वत् ।
स्वातन्त्र्य-हेतोर्यवनाऽऽर्य-मैत्री
युक्ता सुपुष्टा सतताऽभिनन्द्या ॥

( १३४ )

विलिख्य लेखान् विविधांश्च ग्रन्थान्
अजीवनं क्रान्ति-कृतौ निमग्नः ।
काकोरि-काण्डे[४] दशभिस्तु छात्रैः
सहैव युक्तो निगृहीत एषः ॥

( १३५ )

धैर्यस्य मूर्तिश्चरितेन शुद्धो
निर्भीक-योद्धा पतिताऽऽर्त-त्राता ।
गोरखपुरे शूलिमुपागतोऽसौ
शश्वत् प्रपेदे सुयशोऽक्षरं सः ॥

---

१. श्री रामप्रसाद बिस्मिलः ( जन्म ज्येष्ठ शु० ११,१९५४ वि०, मृ० १९ दिस० १९२७ ई० )। २. पिता-मुरलीधर तिवारी । ३. अशफाक उल्ला खां । ४. काकोरी-कांडे ।

( १३६ ) ( श्री अशफाक उल्ला )

स्वातन्त्र्यमूर्तिर्यवनः सुवीरः
अश्फाक[1]-वर्यः शफिकुल्[2]-सुतोऽसौ ।
काकोरि-काण्डे सह बिस्मिलेन
स्व-शौर्यमस्थापयदेष लोके ॥

( १३७ )

स मातृवेदीं[3] समवाप्य संस्थां
स्व-शौर्य-धैर्य-प्रगतिं दिदेश ।
काकोरि-काण्डे समवाप्य शूलिं
यशोऽक्षरं स तनुते ह्यजस्रम् ॥

( १३८ ) ( श्री राजेन्द्र लाहिड़ी )

राजेन्द्रनाथः[4] स क्षितीश-पुत्रो[5]
वीराग्रणीर्बङ्गभुवोऽभिमानम् ।
स दक्षिणेश्वर्-बम-काण्ड-मध्ये
बद्धो निरुद्धो बम-कार्य-विज्ञः ।

( १३९ )

स क्रान्तिकृत्-संघ-सदस्य-भूतः
काकोरि-काण्डादिषु भागमेत्य ।
गोंडा-स्थले शूलिमवाप्य वीरो
लब्ध्वा यशो वीरगतिं प्रपेदे ॥

( १४० ) ( श्री यतीन्द्रनाथदासः )

स बंकिमस्यैष[6] सुतो यतीन्द्रः[7]
संप्राप्य जन्म कलिका[8]-नगर्याम् ।
लाहौर-षड्यन्त्र-कृतौ निरुद्धो
लाहौर-कारागृह-वासमाप ॥

---

१. श्री अशफाक उल्ला खां ( जन्म अक्टू० १९००, मृ० १८ दिस० १९२७ ई० ) । २. पिता-शफीकुल्ला खां । ३. क्रान्तिकृतां मातृवेदी-नाम संस्था । ४. श्री राजेन्द्र लाहिड़ी ( जन्म १८९२ ई०, मृ० १७ दिस० १९२७ ) । ५. पिता-श्री क्षितीशमोहन लाहिड़ी । ६. पिता-श्री बंकिमचन्द्रदासः । ७. श्री यतीन्द्रनाथदासः ( जन्म १९०४, मृ० १३ सित० १९२९ ई० ) । ८. कलिकातापुरी ।

( १४१ )

श्री भक्तसिंह-वटुकेशदत्त-[1]
योगेन क्रान्तेर्दहनं प्रवर्त्य।
त्रि-षष्ट्यहः[2] सोऽनशनं विधाय
यशोऽक्षरं प्राप्य दिवं प्रपेदे॥

( १४२ ) (**श्री रोशनसिंहः**)

श्री रोशनः सिंह[3]-वरो वरिष्ठः
सुक्रान्तिकृत् श्री जगदीशसिंह-।
सुतो[4] गुणज्ञश्च सुमातृवेदी-
संस्था-सदस्यो निजदेश-भक्तः॥

( १४३ )

श्री बिस्मिलादेः सततं सुमित्रं
काकोरि-काण्डे विनिरुद्ध एषः।
नैनी-स्थले शूलिमुपागतोऽसौ
यशःश्रिया राजत एव नित्यम्॥

( १४४ ) (**श्री सरदार भगत सिंहः**)

वीराग्रणीः क्रान्तिकृतां वरेण्यः
श्री भक्तसिंहो[5] नर-वीर-सिंहः।
प्रज्वाल्य क्रान्तेर्दहनं समन्तात्
शूलिं श्रितोऽसौ शलभावतारः॥

( १४५ )

श्री कृष्णसिंहोऽस्य पिता[6] सुधीरो
विद्यावती मातृवरा[7] वदान्या।
पितृव्यवर्यौ च सुवर्णसिंह-
अजीतसिंहौ निज-देश-भक्तौ॥

---

१. श्री भगतसिंह-वटुकेश्वरदत्तौ। २. ६३ दिवसं यावद् अनशनं कृत्वा। ३. श्री रोशनसिंहः (ज० १८९४ ई०, मृ० २० दिस० १९२७)। ४. पिता-श्री जगदीशसिंहः। ५. श्री भगतसिंहः (ज० २७ सित० १९०७, मृत्युः २३ मार्च १९३१ ई०)। ६. पिता—श्री किशनसिंहः। ७. माता—श्रीमती विद्यावती।

( १४६ )

कुलं समस्तं निज-देश-भक्तं
देशार्पित-श्री-सुख-वैभवं च ।
उपास्य कारां च प्रवासनं च
स्वदेश-भक्तौ सततं प्रवृत्तम् ॥

( १४७ )

डी-ए-वि-[१] विद्यालयमेत्य शिक्षाम्
अवाप्य स राष्ट्रिय-कालिजं[२] च ।
मित्रत्वमागाद् निज-देश-भक्तैः
सुवीर-वर्यैर्निज-छात्र-मित्रैः ॥

( १४८ )

विहाय वैवाहिक-वागुरां सः
स्वातन्त्र्य-युद्धे नितरां प्रवृत्तः ।
समाजवादाश्रय-संघमेकं[३]
संस्थाप्य तत्कार्य-धुरम् उवाह ॥

( १४९ )

लाला-वरे[४] दण्ड-निपात-रोषात्
सॉन्डर्समेष[५] विजघान रोषात् ।
दिल्ल्यां बमं चाक्षिपदेष वीरः
चिक्षेप संसद्भवने स्वलेखान् ॥

( १५० )

संसत्प्रकोष्ठे निगृहीत एष
कारागृहे चानशनं प्रपेदे ।
लाहौर-षड्यन्त्रमुपास्य सोऽयं
शूलौ मृतेर्दण्डमवाप वीरः ॥

---

१. डी.ए.वी. स्कूल, लाहौर । २. नेशनल कालेज, लाहौर । ३. हिन्दुस्तान-समाजवादी प्रजातान्त्रिक संघम् । ४. लाला लाजपतराये । ५. उप-पुलिस-निरीक्षकः जे. पी. सान्डर्सः ( J. P. Saunders ) ।

( १५१ )

त्रयोऽपि ते क्रान्तिकृतां वरिष्ठाः
श्री भक्तसिंहः सुखदेव-राज- ।
गुरू[1] श्रितास्ते सममेव सर्वे
शूलिं मुदा देश-स्वतन्त्रतायै ॥

( १५२ )

प्रान्तोत्तरे[2] पञ्चनद-प्रदेशे
स एव क्रान्तेर्दहनं ददाह ।
'क्रान्तिर्जयेत्'[3] मन्त्रवरं प्रवर्त्य
समाजवादं च जुघोष लक्ष्यम् ॥

( १५३ )

समाजवादं च स्वातन्त्रतां च
लब्धुं मुदा दत्तमनेन देहम् ।
श्री भक्तसिंहो निज-देश-भक्तो
न कस्य श्रद्धाञ्जलि-भाजनं सः ॥

( १५४ ) (**श्री सुखदेवः**)

स क्रान्तिकृत् श्री सुखदेव-वर्यः[4]
श्री रामलालस्य सुतः सुधीरः ।
श्री भक्तसिंहेन सहैव शूलिं
श्रितो यशः प्राप स देशभक्तः ॥

( १५५ ) (**श्री शिवराम-राजगुरुः**)

शूरः प्रवीरः शिवराम-वर्यः[5]
पुणे-स्थित-श्रीहरिराज-पुत्रः[6] ।
श्री भक्तसिंहेन सहैव शूलिं
संप्राप्य लेभेऽक्षयकीर्तिमेषः ॥

---

१. सरदार भगतसिंहः, सुखदेवः, राजगुरुश्च । २. उत्तरप्रदेशे । ३. 'इनकलाब ज़िन्दाबाद' इति उद्घोषः । ४. श्रीसुखदेवः ( मृ० २३ मार्च १९३१ ई० ) । ५. श्री शिवराम-राजगुरुः ( राजगुरुः ) ( मृ० २३ मार्च १९३१ ई० ) । ६. पिता—श्री हरिराजगुरुः ।

( १५६ ) ( **श्री वटुकेश्वरदत्तः** )

श्री भक्तसिंहस्य सुहृत् प्रवीरः
सुक्रान्तिकृत् श्री वटुकेशदत्तः ।
संसत्प्रकोष्ठे बम-पात-हेतोः
ख्यातिं गतो वीरगतिं प्रपेदे ॥

( १५७ ) ( **श्री चन्द्रशेखर आजादः** )

श्री भक्तसिंहस्य सुहृद्वरोऽसौ
आजाद-चन्द्रान्वित-शेखरोऽयम्[1] ।
आजीवनं देश-हिते नियुक्तः
स्वदेश-सेवा-तप एव तेपे ॥

( १५८ )

स भावरा-नामक-ग्राम-मध्ये
मध्य-प्रदेशे जनिमाप वीरः ।
पिताऽस्य 'सीता'-पति-'राम' एव[2]
वृत्त्या प्रवृत्त्या ह्यधनस्तु विप्रः ॥

( १५९ )

स संस्कृत-ज्ञानमवाप्तुकामः
काश्यामुषित्वाऽध्ययने प्रवृत्तः ।
सत्याग्रहे गांधिवरस्य भागं
संगृह्य कारागृह-वासमाप ॥

( १६० )

'आजाद' इत्येवमुवाच नाम
'स्वाधीन' इत्येव पितुश्च नाम ।
'कारागृहं' वास-गृहस्य नाम
न्यायालयेऽवोचदसौ प्रवीरः ॥

---

१. श्री चन्द्रशेखर आजादः ( जन्म २३ जुलाई १९०६, मृ० २७ फर० १९३१ ई० )। २. पिता—श्री सीताराम तिवारी ।

( १६१ )

मुक्तो ह्यसौ क्रान्तिदलं निगृह्य
समाजवादाऽऽश्रित-पक्षमाप ।
काकोरि-काण्डे विविधे च काण्डे
श्री बिस्मिलस्यैष[1] चकार योगम् ॥

( १६२ )

स्व-त्याग-निष्ठा-पुरुषार्थ-वृत्त्या
आयोजना-संघटना-गुणेन ।
समाजवादाश्रित-संघ-सैन्य-
सेनापतित्वे सततं नियुक्तः ॥

( १६३ )

यत्रापि कुत्रापि भवेत् प्रहार-
कार्यं तदाऽग्रेसरतां प्रपन्नः ।
सॉन्डर्स-नाशे बम-क्षेपणे च
सहायतां स निदधे ह्यजस्रम् ॥

( १६४ )

स निर्धने प्राप्य कुले स्व-जन्म
सदाऽश्रयद् निर्धनता-प्रकोपम् ।
जन-प्रियो निर्धन-बान्धवोऽसौ
सदा जनानां हितमेव चक्रे ॥

( १६५ )

आजाद-पार्के[2] सहसा निरुद्धो
विश्वासघातेन प्रयाग-मध्ये ।
युद्धे पुनर्योध-गणैः प्रसिद्धे
गोल्याऽऽहतोऽसौ निधनं प्रपेदे ॥

---

१. श्री रामप्रसाद बिस्मिलस्य । २. प्रयागस्थे आजादपार्के ।

( १६६ )

'आजाद' इत्येवमवाप्य नाम
स्वाधीन-वृत्तिं चकमे सदैव ।
समर्प्य देशाय स्वकीय-सर्वं
स्वदेशभक्तोऽक्षर-कीर्तिमाप ॥

( १६७ ) **( श्री सुभाषचन्द्रो वसुः )**

श्री जानकीनाथ-सुतो[१] वरेण्यः
प्रभावती-पुत्र[२]-तपस्वि-रूपः ।
अवाप जन्म कटकाख्य[३]-भूमौ
सुभाष-बोसो[४] वर-वीर-धुर्यः ॥

( १६८ )

कुशाग्रबुद्धिर्नितरां तरस्वी
तपस्वि-रूपो निज-मान-मूर्तिः ।
दुर्भाषिमांग्लं गुरुमेकमेष
दत्त्वा चपेटां समवाप नाम ॥

( १६९ )

गत्वाऽऽङ्ग्लदेशं निज-ज्ञान-भूत्या
उत्तीर्यं चाऽई-सि-यसः[५] परीक्षाम् ।
विदेशि-सेवा-व्रत-रोष-भावात्
तत्याज वृत्तिं निज-देश-भक्तः ॥

( १७० )

अवाप्य सोऽयं चितरंजनस्य
दासस्य योगं निज-देश-भक्तौ ।
समर्प्य सर्वं नितरां प्रवृत्तः
क्रान्त्या च शान्त्या च स्वदेश-मुक्त्यै ॥

---

१. पिता-श्री जानकीनाथबोसः । २. माता-श्रीमती प्रभावतीबोसः ।
३. कटक ( उड़ीसा ) । ४. श्री सुभाषचन्द्र वसुः ( जन्म २३ जन० १८९७, मृत्युतिथिः अपुष्टः १८ अग० १९४५ ई० ) । ५. आई० सी० एस० परीक्षाम् ।

( १७१ )

विरोध्य स आंग्ल-युवाधिराज-
महोत्सवं[1] प्राप निरोधमेव ।
अनेकवारमनुभूय कारां
सोऽदीप्यत स्वर्णरुचिस्तु वह्नौ ॥

( १७२ )

कांग्रेस-अध्यक्ष-पदं द्विवारम्
अशोभयत् स युव-नेतृ-भूतः ।
स चाग्रगामी-दल[2]-स्थापनेन
यूनां सदा नेतृ-पदं दधार ॥

( १७३ )

पठान-वेषेण विदेशमाप्त्वा
क्रान्त्यै च मुक्त्यै सततं प्रयेते[3] ।
आजाद-हिन्दाख्य[4]-चमूं विधाय
स्वदेश-मुक्त्यै अयतिष्ट वीरः ॥

( १७४ )

शर्मण्य-जापान-सुयोगमाप्त्वा
इम्फाल-क्षेत्रं समवाप सेना ।
शर्मण्य-देशस्य पराजयेन
चमूर्निवृत्ता निहता गृहीता ॥

( १७५ )

जापान-देशं प्रति प्रस्थितोऽसौ
विमान-दुर्वृत्तमवाप वीरः ।
विवाद-ग्रस्तं निधनं विमाने
तथापि सोऽदर्शनमाप तत्र ॥

---

१. प्रिन्स ऑव् वेल्स-समारोहम् । २. फार्वर्ड ब्लॉक-संस्थाम् । ३. प्रयत्नं चकार । ४. आजाद-हिन्द-फौज इति ।

( १७६ )

स्वाधीनचेता नितरां जयिष्णुः
देशार्पित-श्रीर्निज-देश-वन्द्यः ।
आंग्लाधिपानां भय-हेतु-भूतः
सुभाषचन्द्रोऽक्षयकीर्तिमाप ॥

( १७७ ) ( **श्री ऊधमसिंहः** )

श्री ऊधमः सिंह-वरो[१] विजेता
तेहालसिंहस्य सुतः[२] सुधीरः ।
नारायणी-पुत्र[३]-सुवीर-वर्यः
पित्रोर्वियोगात् सततं प्रतप्तः ॥

( १७८ )

अमृत्सरे स जलियानवाला-
बागे नृशंसं प्रविलोक्य हत्याम् ।
ओडायरस्यैव[४] वधं विधातुं
स शैशवादेव विनिश्चिकाय[५] ॥

( १७९ )

स लन्दनं प्राप्य पठन् सुशिल्पं[६]
काक्स्टन्-प्रकोष्ठे[७] निजघान दुष्टम् ।
ओडायरं पाप-समूह-मूर्ति
निहत्य स स्वार्पणमेव चक्रे ॥

( १८० )

स्वदेश-रोषं जन-ताप-दोषं
साम्राज्य-दोषं परितः प्रदर्श्य ।
शूलिं श्रितः कीर्तिमवाप सद्यो
लेभे गतिं वीर-विभूति-युक्ताम् ॥



---

१. श्री ऊधमसिंहः (जन्म २६ दिस० १८९८, मृ० १२ जून १९४० ई०)। २. पिता—श्री तेहालसिंहः (चूहड़रामो वा)। ३. श्रीमती हरनाम कौर (नारायणी इति नाम्नी वा)। ४. सर माइकेल ओडायरः, पंचनद-राज्यपालः (Sir Michael O'dwyer) ५. निश्चयम् अकरोत्। ६. इन्जीनियरिंग-विद्याम्। ७. Caxton Hall, London (१३-३-१९४० तिथौ)।

## ५३. भारतीय-क्रान्ति-वृत्तम्, ( ग ) शान्ति-युद्धम्
## ( १८८५ ई०-१९४७ ई० )

( उपजातिवृत्तम् )

( १ ) ( श्री दादाभाई नौरोजी )

नौरोजि-वर्यो[1] निज-देश-भक्तः
स पारसीको विधिशास्त्रवेत्ता।
देशे विदेशे परिभ्रम्य नित्यं
लोके जनान्दोलनमाचकांक्ष ॥

( २ )

स ह्यूम-बैनर्जि-[2] सहायमाप्त्वा
अस्थापयद् भारत-कांगरेसम्[3]।
सोऽघोषयद् भारत-दीनतायै
आंग्लाः समेऽप्युत्तरदायिनः स्युः ॥

( ३ )

यूरोप-जातीय-जना न श्रेष्ठाः
यस्मिंस्तु कस्मिन्नपि कार्यजाते।
स दूतरूपेण जगाम आंग्लं
देशं पुनर्भारत-गौरवाय ॥

( ४ )

यद् भारते व्यापकमस्ति राज्यम्
आंग्लं तदन्याय-नयेन पुष्टम्।
'स्वाधीनतैवास्ति समस्त-दोष-
विनाशहेतुः' इति स प्रपेदे ॥

( ५ ) (श्री फिरोजशाह मेहता)

फिरोजशाहो[4] विधिशास्त्र-विज्ञो
लोकप्रियो राजरतश्च विद्वान्।
कांग्रेस-कार्ये रुचिमादधानो
नीतेः कृतेर्निर्मिति-साधकोऽभूत् ॥

---

१. श्री दादा भाई नौरोजी ( ज० ४ सित० १८२५, मृ० १९१७ ई० )। २. श्री ए. ओ. ह्यूम, उमेशचन्द्र बनर्जी च। ३. भारतीय-राष्ट्रीय-कांग्रेसः।

( ६ )

शान्तिप्रियो राजरतोऽपि धीरः
सोऽन्याय-कार्यस्य विरोधकोऽभूत् ।
आंग्लस्य दुर्नीति-विरोध-कर्ता
हितं जनानामनिशं चकार ॥

( ७ ) ( श्री सुरेन्द्रनाथ बनर्जी )

सुरेन्द्रनाथो[1] गुणिनां वरिष्ठो
वाग्मि-प्रवीरो रचना-प्रवीणः ।
सत्कल्पनायां नितरां सुदक्षो
वीरत्व-हुंकारयुतो ह्यधृष्यः ॥

( ८ )

स भारतस्यैक्यमवाप्तुकामः
सर्वान् जनान् धर्म-प्रदेश-भिन्नान् ।
सोऽबोधयद् नैव विभेद-भिन्नाः
सुभारतीया वयमेकरूपाः ॥

( ९ )

देशस्य एकत्वमपास्य नास्ति
संभावना भारत-राष्ट्र-भूतेः ।
स जाति-भेदेन च वर्णभेदात्
तिरस्कृतो नाऽऽप वरिष्ठ-डिग्रीम्[2] ॥

( १० )

क्षुब्धः प्रक्रुद्धो निज-राष्ट्र-सेवा-
व्रते निमग्नो नगरे प्रदेशे ।
प्रबोधयन् लोक-मतं त्वभीक्ष्णम्
आन्दोलनं ज्वालयितुं ययौ सः ॥

---

१. श्री सुरेन्द्रनाथ बनर्जी ( जन्म नव० १८४८ ई०, मृ० १९२५ ई० ) ।
२. बैरिस्टर-उपाधिम् ।

( ११ )

स बङ्गभङ्गस्य कुनीति-मूले
आन्दोलने युद्धपरो बभूव ।
आश्रित्य शीतं दलमेव[1] नित्यं
वैधानिकं युद्धमियेष कर्तुम् ॥

( १२ ) ( **श्री महादेव गोविन्द रानाडे** )

गोविन्द-रानाड-वरः[2] सुधीरो
न्याय-प्रियो न्याय-विभूतिरेव ।
स न्यायमूर्तिर्निजदेशभक्तः
सेवा-नियुक्तोऽपि स्व-देश-रक्तः ॥

( १३ )

शृङ्ग-प्रभः सौम्य-विशाल-मूर्तिः
कीर्त्या श्रिया चैव सदैव जुष्टः ।
दीनोद्धृतौ संततमेव लग्नः
समाज-सेवा-व्रतमाचकांक्ष ॥

( १४ )

स ह्यर्थशास्त्री इतिहास-विज्ञो
ग्रन्थाननेकान् प्रणिनाय नव्यान् ।
समाजसेवा-नव-राष्ट्र-कार्ये
स्मरिष्यते तस्य शुभं तु नाम ॥

( १५ ) ( **श्री गोपालकृष्ण गोखले** )

गोपालकृष्णो[3] बुध-गोखलेऽसौ
अवाप्य दीने सुकुले स्व-जन्म ।
संघर्षसक्तो निज-धैर्य-बुद्ध्या
शिक्षां विशिष्टामलभिष्ट शीघ्रम् ॥

---

१. नरम-दलम् । २. श्री महादेव गोविन्द रानाडे ( ज० १८ जन० १८४२, मृ० १६ जन० १९०१ ई० ) । ३. श्री गोपालकृष्ण गोखले ( ज० ९ मई १८६६, मृ० १९ फर० १९१५ ई० ) ।

( १६ )

देशे त्वपूर्वा जन-जागृतिर्या
व्याप्ता नवोत्थान-परंपरा च।
आश्रित्य तां 'भारत-सेवकानाम्'[१]
अस्थापयत् स समितिं प्रपुष्टाम् ॥

( १७ )

तथैव 'शिक्षा-समितिं'[२] तु दक्षिणे
संस्थाप्य, फर्गूसन-कलिजस्य[३]।
सर्वां व्यवस्थां सुनिरीक्ष्य, चक्रे
'बालं' गुरुं तं 'तिलकं'[४] सुविज्ञम् ॥

( १८ )

स मञ्जु-वाक्योऽपि कटुः सुतीक्ष्णः
अन्याय-नाशे सततं प्रवृत्तः।
सदैव दीनोद्धरणे नियुक्तो
दीनाऽर्ति-नाशाय न्यबोधयच्च ॥

( १९ )

महात्म-गांधेर्गुरु-वर्य-भूतः
त्यागस्य दानस्य गुणस्य मूर्तिः।
राष्ट्रेषु स्याद् भारत-गौरवर्द्धिः
ऐच्छत् स्वदेशस्य सुखस्य वृद्धिम् ॥

( २० ) ( **श्री बालगंगाधरः तिलकः** )

मान्यो ह्यसौ भारत-भूमि-भाले
देदीप्यमानस्तिलकः[५] सुरम्यः।
'गंगाधरो' भूधर एव सत्यं
'बालो' ऽप्यबालस्तरुणस्तरस्वी ॥

---

१. भारत-सेवक-समितिः। २. डकेन एजुकेशन सोसाइटी-इति। ३. फर्ग्यूसन कालेज, पूना। ४. तिलकं स्व-गुरुं चक्रे। ५. श्री बाल-गंगाधर तिलकः ( जन्म २३ जुलाई १८५६, मृ० १ अगस्त १९२० ई० )।

( २१ )

स राष्ट्र-बन्धुर्जनताऽन्तरात्मा
न्याय-प्रियो नीतिविदां वरिष्ठः ।
नेतोष्ण-वर्गस्य[1] च राष्ट्र-धर्मा[2]
'स्वाधीनता'-मन्त्र-प्रदो[3]ऽभिमानी ॥

( २२ )

किरीट-हीनोऽपि स भारतेशः
शिवाजि-वीर-स्मृति-नायकोऽसौ ।
स्वीयेन लेखेन च भाषणेन
प्रसारयत् क्रान्ति-दवाग्निमेतम् ॥

( २३ )

स उग्रनीतिर्वचने क्रियायाम्
आंग्लं तु राज्यं तरसा दिधक्षुः[4] ।
कांग्रेस-नीतौ परिवर्तनेच्छुः
अस्थापयद् उष्णदलं[5] स्वदेशे ॥

( २४ )

स्वदेश-सेवा-व्रतमास्थितोऽसौ
सुकण्टकाकीर्ण-पथं तु वव्रे ।
प्राचालयत् पत्रद्वयं[6] 'मराठां'
स 'केसरीं' च निज-भाव-व्यक्त्यै ॥

( २५ )

शस्त्रं च शास्त्रं द्वयमेव तन्त्रम्
आदाय हस्ते तु युयुत्सुरेषः ।
शास्त्रेण यन्नैव हि शक्यमाप्तुं
शास्त्रेण प्राप्यं तु स्वराज्यमेतत् ॥

---

१. गरम-दलस्य । २. राष्ट्र-धर्मोपासकः । ३. 'स्वातन्त्र्यमस्माकं जन्म-सिद्धोऽधिकारः' इति मन्त्रः । ४. दग्धुमिच्छुः । ५. गरम-दलम् । ६. समाचार-पत्र-द्वयम्—मराठा केसरी चेति ।

( २६ )

स लेख-भाषैर्भरतावनौ तु
क्रान्तेः प्रसारं नितरामियेष ।
न भिक्षया प्राप्यमिदं स्वराज्यं
लोकस्य शक्त्या सुतरां तु लभ्यम् ॥

( २७ )

'स्वराज्यमस्मत्सहजाऽधिकारो'
लभ्यं सुरक्ष्यं निज-देश-भक्तैः ।
क्रान्त्यैव लभ्यं निज-देश-राज्यम्
आंग्लं च राज्यं तरसा समाप्यम् ॥

( २८ )

बन्दीकृतोऽसौ अवदत् सुधीरः
अहं निरागा[1] नहि बन्धयोग्यः ।
अन्यैव शक्तिर्जगतो नियन्त्री
बन्धो ममास्त्वेष हि देश-मुक्त्यै ॥

( २९ )

गांधेर्गुरुर्देश-समाज-मुक्तौ
देशस्य नेतृत्वमधात् सुवीरः ।
कारागृहे स व्यलिखत् सुग्रन्थान्
गीता-रहस्यं च श्रुतेस्तु धाम[2] ॥

( ३० )

स लोक-मान्यो तितरां वदान्यो
देशार्पित-श्रीर्जन-नायकोऽसौ ।
प्राप्यापि दुःखौघमजस्रमेव
दिवं ययौ भारत-बन्धुरेषः ॥

---

१. निरपराधः । २. गीतारहस्यम्, Arctic home of the Vedas ।

( ३१ )

स्वदेश-भक्तस्य त्रिमूर्तिरेषा
बालं च लालं सुनिगृह्य पालम्[1] ।
क्रान्तेस्त्रयी भारत-भूमि-भागे
प्रासारयत् क्रान्ति-दवाग्निमेतम् ॥

( ३२ ) ( श्री लाला लाजपतरायः )

शूराग्रणी'र्लाजपतस्तु रायो'[2]
'लालो' भुवो देश-सुधर्म-निष्ठः ।
यतेर्दयानन्द-वरस्य शिक्षां
संप्राप्य देश-व्रतमादधार ॥

( ३३ )

आ-जन्मनो देश-समाज-कार्ये
मुदा प्रवृत्तो जन-जीवनोऽसौ ।
सुधार-कार्ये पतितोद्धृतौ च
शिक्षा-प्रसारे रुचिमाबबन्ध ॥

( ३४ )

अस्थापयद् आर्यसमाजमेष
ग्रामे पुरे पञ्चनद-प्रदेशे ।
अस्पृश्य-दीनोद्धरणे निमग्नः
क्रान्तेः प्रचारे सततं नियुक्तः ॥

( ३५ )

वक्तृत्व-शक्तौ प्रखरः सुवाग्मी
बभ्राम देशं च विदेशमेव ।
सिंह-क्रमः पञ्चनद-प्रदेशे
आंग्लाधिपानां भयमेव तेने ॥

---

१. श्री बालगंगाधर-तिलकः, लाला लाजपतरायः, विपिनचन्द्रपालश्च ।

२. श्री लाला लाजपतरायः ( जन्म २८ जन० १८६५, मृ० १७ नव० १९२८ ई० ) ।

( ३६ )

त्रस्ताश्च रुष्टाश्च हि आंग्ल-देश्याः
विदेश-वासं वरमस्य जज्ञुः ।
कांग्रेस-अध्यक्ष-पदं[1] प्रशोभ्य ॥
युद्ध-प्रियो युद्ध-रतिर्बभूव ॥

( ३७ )

सोऽस्थापयद् भारत-सेवकानां
समाजमेकं[2] निज-देश-मुक्त्यै ।
आयोग[3]- विद्रोह-निमित्तमेष
वृद्धोऽपि दण्डैः प्रहृतः समन्तात् ॥

( ३८ )

सोऽघोषयद् दण्ड-निपात एष
आंग्लाधिपानां शव-कीलकं स्यात् ।
मुदा प्रवृत्तो निज-देश-भक्तौ
दिवं ययौ राष्ट्र-समाज-नेता ॥

( ३९ ) ( **श्री विपिनचन्द्र पालः** )

स पाल-वर्यो विपिनस्तु चन्द्रो
बंग-प्रदेशाऽऽप्त-सुकीर्ति-पुष्टः ।
वाग्मित्व-हेतोः प्रथितः स्वदेशे
लेखैरकर्षद् युव-शक्तिमेताम् ॥

( ४० )

बंग-प्रभङ्गे च स्वदेशि-युद्धे
सोऽनारतं[5] युद्ध-र्तातं ततान ।
यातो विदेशं च स शिष्ट-वर्गे
ययौ दिवं देश-समाज-निष्ठः ।

---

१. कलिकातानगर्यां १९२० ई० कांग्रेसाध्यक्षः । २. भारत-सेवक-समाजम् ( Servants of India Society ) । ३. साइमन आयोगस्य ( Simon Commission ) विरोधस्वरूपम् । ४. श्री विपिन-चन्द्रपालः ( ज० १८५८, मृ० १० मई, १९३२ ई० ) । ५. निरन्तरम् ।

( ४१ ) ( **श्री मदनमोहन मालवीयः** )

श्री मालवीयो मदन-प्रमोहो[१]
धर्मं श्रितो धर्म-परायणोऽसौ ।
कष्टेन बाल्ये समवाप्य शिक्षां
मुदा नियुक्तो निज-देश-कार्ये ॥

( ४२ )

संस्थाप्य काश्यां सुविरूढ-मूलं
ज्ञानगृहं[२] राष्ट्र-समाज-वृद्ध्यै ।
लेभेऽक्षयां कीर्तिमसौ विपश्चिद्
महामना मानव-सौख्य-दायी ॥

( ४३ )

स निर्धनानां हित-साधनार्थं
प्रादात् सुवृत्तीर्गुण-ज्ञान-वृद्ध्यै ।
वक्तृत्व-शक्त्याऽऽहृत-लोक-प्रीतिः
स राजनीतौ गरिमाणमाप ॥

( ४४ )

कांग्रेस-अध्यक्ष-पदं द्विवारं[३]
संशोभ्य कारां स ययौ सुभक्तः ।
हिन्दुत्व-भक्तो निज-देश-रक्तो
हिन्दी-सुभक्तश्च परार्थ-युक्तः ॥

( ४५ ) ( **श्री मोतीलाल नेहरुः** )

स मोतिलालो[४] गरिमाऽनवद्यो
मुक्तामयो लाल-मयो गुणैश्च ।
संशोभ्य वंशं निज-नेहरूकं
स्वातन्त्र्य-युद्धे रुचिमादधार ॥

---

१. श्री महामना मदनमोहन मालवीयः ( जन्म २५ दिस० १८६१, मृ० १२ नव० १९४६ ई० ) । २. काशी हिन्दू-विश्वविद्यालयः । ३. सन् १९०९ ई० लाहौरे, १९१८ ई० दिल्ल्याम् । ४. श्री मोतीलाल नेहरुः ( जन्म ६ मई १८६१, मृ० ६ फर० १९३१ ई० ) ।

( ४६ )

संप्राप्य गांधेस्तु निदेशमेष
विहाय सर्वां निज-वैभवाऽऽभाम् ।
देशानुरागेण सुखानुरागं
जिगाय त्यागेन धनानुरागम् ॥

( ४७ )

स प्राड्विवाको विधिशास्त्र-वेत्ता
प्रयाग-भूतिर्विभवस्य कोषः ।
संप्राप्य गांधेर्गुणिनस्तु संगं
स्वदेश-सेवा-व्रतमाश्रयत् सः ॥

( ४८ )

निर्भीक-योधः कुशलः सुवाग्मी
दृढ-प्रतिज्ञः स्थिरधीर्विपत्तौ ।
देशोद्धृतौ दत्त-समस्त-वित्तः
आनन्द-गेहस्य[1] च गेह-लक्ष्मीः ॥

( ४९ )

संशोभ्य वारद्वयमेष विज्ञः
कांग्रेस-अध्यक्ष-पदं प्रवीणः ।
संसह्य कारा-गृह-वास-दुःखं
स्वातन्त्र्य-यज्ञाऽऽहुतिमाश्रयत् सः ॥

( ५० ) ( **श्री चितरंजनदासः** )

दासः स शूरः चितरंजनाख्यः[2]
कीर्त्याः श्रियाः साधुगुणस्य मूर्तिः ।
स्वातन्त्र्य-भावाऽऽहृत-धीर-बुद्धिः
आंग्लालये[3]ऽप्यात्त-निजाभिमानः ॥

---

१. आनन्दभवन-नामकगृहस्य । २. श्री देशबन्धुः चितरंजनदासः ( ज० ५ नव० १८७०, मृ० १६ जून १९२५ ई० ) । २. इंग्लैंड-देशे ।

( ५१ )

स प्राड्विवाकस्य विहाय वृत्तिं
गांधेर्निदेशाद् निज-देश-रक्तः ।
क्रियात्मकं भागमधत्त नित्यं
स्वातन्त्र्य-युद्धे समराग्रणीः सः ॥

( ५२ )

त्यागेन शौर्येण च देशबन्धुः
स्वराज्य-पार्टी-प्रथनाऽनुरक्तः ।
शवाऽनुयातैस्त्रय-लक्ष-लोकैः[1]
चितां श्रितो वीर-गतिं प्रपेदे ॥

( ५३ ) **( श्री महात्मा गांधिः )**

स्वातन्त्र्य-हेतुं सुख-शान्ति-सेतुं
सत्यस्य केतुं रिपु-धूमकेतुम् ।
देशोन्नतौ त्यक्त-समस्त-वित्तं
नमामि गांधिं गुण-गौरवाब्धिम् ॥

( ५४ )

महात्म-गांधि[2]र्जन-प्राण-रूपः
सत्याग्रहे दत्तरुचिर्वदान्यः ।
प्राप्याऽफ्रिकां[3] भारत-भूमिजानां
संहृत्य क्षोभं निज-देशमायात् ॥

( ५५ )

सत्याग्रहान्दोलनमेष वीरः
संचाल्य देशस्य स्वतन्त्रतायै ।
आंग्लाधिराज्यं विनिनीषुरेषः[4]
देशे विदेशे भ्रमणं चकार ॥

---

१. लक्ष-त्रय-लोकैः । २. राष्ट्रपिता श्री मोहनदास करमचंद गांधी ( ज० २ अक्टू० १८६९ ई०, मृ० ३० जन० १९४८ ई० ) । ३. दक्षिण-अफ्रीका-देशम् । ४. विनाशयितुकामः।

( ५६ )

सत्याग्रहं शंखमसौ प्रवीरो
दध्मौ समे भारत-भूमि-भागे।
अन्याय-मूलं कुनयं प्रहर्तुं
सदा जनाऽऽन्दोलन-शस्त्रमैच्छत् ॥

( ५७ )

स पीडितानां परमः सुबन्धुः
दरिद्र-दीनोद्धरणे नियुक्तः।
समाज-सेवा-व्रतमादधानो
दुःखाग्नि-दाहं सुखमेव मेने ॥

( ५८ )

अस्पृश्यता-दोष-निवारणार्थं
तेपे तपः स बहुधा हितैषी।
स्त्रीणां समुद्धार-निमित्तमेष
शिक्षा-प्रसारं वनितासु चक्रे ॥

( ५९ )

स धार्मिकं द्वेषमपास्तुकामो
व्रतोपवासान् विविधान् व्यधत्त।
स्वदेश-वस्तु-व्यवहार-हेतोः
देश्यान् समस्तान् समबोधयत् सः ॥

( ६० )

अहिंसनं सत्यमुपास्य शस्त्रं
न्यपातयत् त्वाऽऽङ्ग्ल-चमूं समस्ताम्।
देशस्य स्वातन्त्र्य-व्रते नियुक्तः
कारागृहं स्वं गृहमेव मेने ॥

( ६१ )

सत्याग्रहेणाऽऽप्त-स्वदेश-राज्यः
स राष्ट्र-पातेति पिता[1] वरेण्यः ।
समर्प्य देशाय स्वकीय-जीवनं
यशःश्रिया स्थास्नु[2]रसौ महात्मा ॥

( ६२ ) ( श्री जवाहरलाल-नेहरुः )

जवाहरो भारत-भूमि-लालः[3]
स नेहरू-नाम-श्रियैव ख्यातः ।
स मोतिलालस्य सुतो वदान्यः
सुधीर-चेताः करुणाऽऽलयश्च ॥

( ६३ )

स राष्ट्रनेता, जन-मानसस्य
सम्राडिति ख्यातिमुपागतश्च ।
धीरः प्रवीरो ।वदुषां वरिष्ठो
वाग्मी गुण-श्री-गरिमाऽऽलयश्च ॥

( ६४ )

महात्मनो गांधि-वरस्य शिष्यः
शौर्यस्य मूर्तिर्गरिमाऽनवद्यः ।
प्रवर्तितो दीप इव प्रदीपाद्
योग्यात् पितुर्योग्य-सुतोऽजनिष्ट ॥

( ६५ )

स्वातन्त्र्य-युद्ध-प्रहरीव सोऽयं
कांग्रेस-नेतृत्वमधात् सुधीरः ।
लाहौर-कांग्रेस-सुनायकत्वे
पूर्णं स्वराज्यं चकमे स्व-लक्ष्यम् ॥

---

१. राष्ट्रपिता । २. चिरस्थायी । ३. श्री जवाहर लाल नेहरुः ( ज० १४ नव० १८८९ ई०, मृ० २७ मई १९६४ ई० ) ।

( ६६ )

अनेकवारं समुपास्य कारां
स आंग्ल-निष्कासन-तत्परोऽभूत् ।
'त्यजन्तु आंग्ला भरतस्य भूमिं'
सोऽघोषयद् गांधिवरेण सार्धम् ।

( ६७ )

स्वातन्त्र्य-युद्धे विजयं प्रलभ्य
प्रधान-मन्त्रित्वमशोभयत् सः ।
आजीवनं मन्त्रिपदे नियुक्तः
स्वदेश-सेवा-व्रतमाचकांक्ष ॥

( ६८ )

स भारतेऽस्थापयदात्मतन्त्रं
स पञ्चशीलं च समाजवादम् ।
धर्मैक्यमाचार-विचार-शुद्धिं
विश्वस्य बन्धुत्व-समत्व-शान्तिम् ॥

( ६९ ) ( **श्री सरदार-पटेलः** )

'पटेल'-वर्यो[१] गुण-गौरव-श्रीः
स 'वल्लभो' भारत-मातुरेव ।
शौर्येण धृत्या 'सरदार' एष
'भाई' स दीनाऽऽर्त-हितैषणाच्च ॥

( ७० )

सिंहाकृतिः सिंह-पराक्रमः स
'लौहो नरः[२]' ख्यातिमुपागतश्च ।
व्रती तरस्वी दृढ-निश्चयोऽसौ
स्वराष्ट्र-निर्माण-कृतौ नियुक्तः ॥

---

१. श्री सरदार वल्लभ भाई पटेलः ( जन्म ३१ अक्टू० १८७५, मृ० १६ जन० १९५१ ई० )। २. लौह-पुरुषः इति ।

( ७१ )

न जात्वशक्यमिति वक्तुकामः
साध्यं समं[1] घोर-परिश्रमेण ।
अनेकवारं समुपास्य काराम्
आंग्लाधिपानां भयमेव तेने ॥

( ७२ )

स्वराष्ट्र-मन्त्रित्व-पदं सुशोभ्य
अमेलयद् देशज-राज्य-वर्गम् ।
स्व-धर्म-शिक्षा-गुण-संस्कृतीनां
संरक्षकः शत्रु-निबर्हणश्च[2] ॥

( ७३ )

देशैक्य-कृत्ये जनता-समृद्धौ
स्वातन्त्र्य-सिद्धौ धन-धान्य-वृद्धौ ।
संस्थाप्य नामाऽक्षरमेव लोके
दिवं ययौ भारत-भू-सुपुत्रः ॥

( ७४ ) ( **श्री डॉ० राजेन्द्रप्रसादः** )

राजेन्द्र-वर्यो[3] विदुषां वरिष्ठो
'विहार-गांधिः' प्रथितः स्वदेशे ।
मेधावि-छात्रेषु धुरीण एष
लोकोद्धृतौ दत्तमना बभूव ॥

( ७५ )

गांधेः सुशिष्यत्वमवाप्य सोऽयं
विहाय वाक्कील-सृतिं सुधीरः ।
चम्पारने[4] ख्यातिमवाप्य युद्धे
स गांधि-वाद-व्रतमाश्रयच्च ॥

---

१. सर्वम् । २. शत्रु-नाशकः । ३. श्री डा० राजेन्द्र प्रसादः ( ज० ३ दिसम्बर १८८४, मृ० २८ फर० १९६३ ई० ) । ४. चम्पारन ( विहार )-सत्याग्रहे ।

( ७६ )

सारल्य-मूर्तिर्वचने क्रियायां
सत्यप्रियः सत्यव्रतो व्रती सः ।
स्वदेश-भाषा-निज-संस्कृतौ च
नित्याऽनुरक्तो जनताऽनुरक्तः ॥

( ७७ )

संशोभ्य राष्ट्राधिपतेः[1] पदं स
कीर्त्या श्रिया गौरव-गीतिमाप्तः ।
'राजेन्द्र बाबू' इति प्रेमपात्रं
दिवं श्रितो देश-समाज-निष्ठः ॥

( ७८ ) **( श्री मौलाना आजादः )**

आजाद-वर्यो[2] निज-देश-भक्तो
मक्का-स्थले जन्म-ग्रहं चकार ।
स भारतं प्राप्य गृहे स्वकीये
शिक्षां च दीक्षां विधिवत् प्रपेदे ॥

( ७९ )

अनेक-भाषा-प्रवणः सहिष्णुः
स भारतीयो यवनोऽपि जात्या ।
देश-प्रियो देश-हिते निमग्नो
धर्मान्ध-धीनां प्रबलो विरोद्धा ॥

( ८० )

हिन्दुर्भवेद् वा यवनोऽपि वा स्यात्
सर्वेऽपि देशस्य हिताय जाताः ।
स्व-राष्ट्र-रक्षा-व्रत-पालनेन
देशोन्नतिः संभवतीह नित्यम् ॥

---

१. राष्ट्रपति-पदम् । २. श्री मौलाना अबुल कलाम आजादः ( ज० दिस० १८८८ ई०, मृ० २२ फर० १९५८ ई० ) ।

( ८१ )

बन्धुत्व-शिक्षां प्रतिपाद्य सर्वान्
देशोन्नतौ आह्वयदेष देश्यान् ।
समाधिकारोऽस्ति स्वदेश-भूमौ
समं च कर्तव्यमतो नियुक्तम् ॥

( ८२ )

न धर्मभेदेन हि प्रेम-भेदः
स्वदेश-धर्मः परमो हि धर्मः ।
तदर्थमास्थाय व्रतं समेऽपि
स्वदेश-रक्षा-व्रतमाश्रयध्वम् ॥

( ८३ )

धर्माश्रया या सकलाऽपि भेद-
नीतिः श्रिताऽऽङ्ग्लैः परिशोषणाय ।
सा शोषणार्था भय-दुःख-दात्री
हेया विनाश्या निज-देश-हेतोः ॥

( ८४ )

इत्थं व्रतं देश-हिताय रक्षन्
ग्रन्थाननेकान् व्यलिखत् सुविज्ञः ।
धीरः सुवीरः कृतधीर्नयज्ञो
दिवं श्रितो देश-समाज-भक्तः ॥

( ८५ ) ( **श्री गोविन्दवल्लभ पन्तः** )

श्री पन्त-वर्यो[1] विधिशास्त्र-विज्ञो
'गोविन्द'-नामा जन-'वल्लभो' ऽसौ ।
कूर्माचलं[2] जन्म-सुकार्यजातैः
अशोभयत् पर्वत-राजि-राजम् ॥

---

१. श्री गोविन्द वल्लभ पन्तः ( ज० १० सित० १८८७, मृ० ७ मार्च १९६१ ई० ) । २. कुमायूं-क्षेत्रम् ।

( ८६ )

कांग्रेस-संस्थां समुपास्य नित्यं
तदर्थमास्थाय च कार्य-जातम् ।
प्रान्तोत्तरे[१] मन्त्रिपदे नियुक्तः
स्वदेश-सेवा-व्रतमादधार ॥

( ८७ )

गांधेर्गुरोश्चायमवाप्य दीक्षां
जनोद्धृतौ देश-हिते प्रसक्तः ।
धराऽऽधिपत्यं[२] सहसा समाप्य
स चाऽऽर्यभाषोद्धरणं व्यधत्त ॥

( ८८ )

स्वराष्ट्र-मन्त्रित्वमवाप्य केन्द्रे
स्वभाषणैः पुष्ट-क्रिया-कलापैः ।
संप्राप्य कीर्तिं विपुलां विधिज्ञः
स्वदेश-हेतोर्दिवमाश्रयत् सः ॥

( ८९ ) **( श्री पुरुषोत्तमदास टंडनः )**

श्री टण्डनो[३] भारत-भूमि-भूतिः
स्व-ज्ञान-लक्ष्म्या 'पुरुषोत्तमोऽ'सौ ।
स ईश-'दासो' जन-मानसेशः
प्रयागराजं जनुषाऽबुभूषत्[४] ॥

( ९० )

स हिन्दि-भाषा-प्रथनाऽनुरक्तः
संमेलन[५]-स्थापनमेष चक्रे ।
प्रयाग एवैष विधान-विज्ञः
समाज-कार्यं प्रमुदा व्यधत्त ॥

---

१. उत्तरप्रदेशे । २. जमींदारी-प्रथोन्मूलनम् । ३. श्री पुरुषोत्तमदास टंडनः (ज० ११ अगस्त १८८२, मृ० १ जुलाई १९६२ ई० ) । ४. जन्मना अभूषयत् । ५. प्रयागस्थ-हिन्दी-साहित्य-संमेलनम् ।

( ९१ )

श्री मालवीयस्य[1] सुशिष्य-भूतः
तपस्विरूपो विपदां सहिष्णुः ।
विहाय सर्वं सुख-साधनं स
यतिव्रतो देश-हिते नियुक्तः ॥

( ९२ )

समाज-सेवा-व्रतमास्थितोऽयं
कारागृहे च न्यवसत् सुधीरः ।
संशोभ्य चाऽध्यक्षपदं विधान-
सभा-गृहे प्राप सुकीर्तिमिष्टाम् ॥

( ९३ )

सिद्धान्तवादी शुचिताऽनुरागी
हिन्दी-प्रियो हिन्दि-प्रसार-रक्तः ।
संस्थाप्य हिन्दीं स हि राष्ट्रभाषा-
पदे ददौ राष्ट्रहिताय देहम् ॥

( ९४ ) **( आचार्य नरेन्द्रदेवः )**

नरेन्द्रदेवो[2] विदुषां वरिष्ठः
स्वदेशभक्तः स्वगुणैः प्रसिद्धः ।
शिक्षा-जगत्यां समवाप्य कीर्तिम्
आचार्यभारं स उवाह काश्याम्[3] ॥

( ९५ )

समाजवाद-प्रथनाऽनुरक्तो
विवेचको वाग्मिवरो वदान्यः ।
शिक्षा-विशेषज्ञ-वरो विपश्चित्
सुलेखको दर्शन-शास्त्र-दक्षः ॥

---

१. श्री मदनमोहन-मालवीयस्य । २. आचार्य नरेन्द्रदेवः ( जन्म ३१ अक्टू. १८८९ ई० ) । ३. काशी-विद्यापीठे ।

( ९६ )

वैदुष्य-वाग्मित्व-गुणैरजस्रं
समाजवादोद्धरणेन देशे ।
राष्ट्रीय-कार्योद्धरणेन नित्यं
लोकार्चनं प्राप्य दिवं ययौ सः ॥

( ९७ ) ( **श्री लालबहादुर शास्त्री** )

गुणाकरो लाल-बहादुरोऽसौ[1]
शास्त्रीति ख्यातो वर-वीर-योधः ।
त्यागी तपस्वी शुचिताऽनुरागी
जयत्यसौ भारत-भूमि-लालः ॥

( ९८ )

दीने कुले प्राप्य जनिं सुवीरः
स्वपौरुषेणाऽऽप्त-गुणोच्चय-श्रीः ।
स्वालम्बनं चात्मबलं निगृह्य
स्वदेश-मूर्धाऽऽभरणं बभूव ॥

( ९९ )

त्यागे रतिं चाऽऽत्मबलेऽनुरक्तिं
देशेऽनुरक्तिं जनताऽनुरक्तिम् ।
कार्यानुरक्तिं शुचिताऽनुरक्तिं
समाश्रितो लोकप्रियो बभूव ॥

( १०० )

प्रधानमन्त्रित्व-पदं श्रितोऽसौ
युद्धे खरे पाकचमूं दधर्ष ।
पाकैर्विपाको विनिपात-रूपो
लेभे स्व-शस्त्रास्त्र-विनाश-रूपः ॥

---

१. श्री लालबहादुर शास्त्री ( ज० २ अक्टू० १९०४, मृ० ११ जन० १९६६ ई० ) ।

( १०१ )

योधो जयत्वेष कृषीवलश्च[1]
उद्घोष-मन्त्रस्य स जन्मदाता ।
शस्त्रास्त्र-वृद्धौ धन-धान्य-वृद्धौ
लेभे यशश्चैष स्व-देश-भक्तः ॥

( १०२ )

कारामुपास्यैव मुदाऽष्टवारं
क्लेशानशेषानसहिष्ट धोरः ।
काश्या यशो भारत-भूमि-भागेऽ-
वर्धिष्ट वीरो निज-वीर-कृत्यैः ॥

( १०३ )

मृदुः प्रकृत्या युधि धीरमूर्तिः
वीराग्रणीः सार्थक-नामधारी ॥
देशोन्नतौ सन्ततमेव लग्नो
रूस-प्रदेशे दिवमाश्रयत् सः ॥

( १०४ )

अन्येऽपि केचित् प्रथिताः सुधोराः
स्वदेशभक्ता निज-देश-भक्त्या ।
तेषां यशोऽप्यक्षरमत्र पूतं
सनामग्राहं कवि-वर्णनार्हम् ॥

( १०५ ) ( **श्री बंकिमचन्द्र चटर्जी** )

कविर्वरो बंकिमचन्द्र-वर्यः
प्रणीय प्रेष्ठं निज-राष्ट्रगानम् ॥
विरच्य चाऽऽनन्दमठं गरिष्ठं
लेभे यशः स्थास्नु स्वदेशभक्त्या ॥

---

१. 'जय जवान' 'जय किसान' इति उद्घोषः ।

( १०६ ) ( श्री स्वामी श्रद्धानन्दः )

स स्वामि-'श्रद्धा'दिक-'नन्द'-वर्यो[1]
यतेर्दयानन्द-वरस्य शिष्यः ।
संस्थाप्य शिक्षां तु गुरोः कुलस्य
स 'कांगड़ी'-[2]जन्म-प्रदो जिगाय ॥

( १०७ )

स्वातन्त्र्य-युद्धे सततं प्रवृत्तो
गांधेर्गुरोर्नीति-प्रचारकश्च ।
समर्प्य देशाय स्वकीय-लक्ष्मीं ।
यशोऽक्षरं प्राप स्वदेश-भक्तः ॥

( १०८ ) ( श्री भाई परमानन्दः )

स भ्रातृ-वर्यः परमाऽऽर्य-वीरः[3]
संधुक्ष्य क्रान्तेर्दहनं समन्तात् ।
सोढ्वाऽण्डमाने विषमा विपत्तीः
देशोद्धृतौ सन्ततमेव लीनः ॥

( १०९ )

आर्य-ध्वनिं क्रान्ति-ध्वनिं विदेशे
प्रसार्य दीनाऽऽर्त-हिते नियुक्तः ।
आर्यत्व-भावैःपरिपुष्ट-कीर्तिः
देशव्रतः सोऽक्षयकीर्तिमाप ॥

( ११० ) ( श्री अली-बान्धवौ )

स्वातन्त्र्य-युद्धे यवनान् प्रबोद्धुम्
अली-द्वयस्यास्ति[4] महान् सुयोगः ।
वक्तृत्व-शक्त्या निज-देश-भक्त्या
कांग्रेस-नेतृत्वमिमौ व्यधाताम् ॥

---

१. श्री स्वामी श्रद्धानन्दः ( महात्मा मुंशीरामः ) (जन्म १८५६ ई०, मृ० २३ दिस० १९२६ ई०) । २. गुरुकुल कांगड़ी-विश्वविद्यालयस्य जन्मदाता । ३. श्री भाई परमानन्दः ( जन्म १८७६, मृ० १८ दिस० १९४७ ई० ) । ४. मौलाना मुहम्मद अली, मौलाना शौकत अली च ।

( १११ )

श्री शौकतोऽली च मुहम्मदोऽसौ
स्वदेश-भक्त्याऽऽहृत-मानसौ तौ ।
विरोध-आन्दोलन[1]-प्राप्त-कीर्ती
तौ संन्यधातां यवनाऽऽर्य-प्रीतिम् ॥

( ११२ ) ( श्रीमती एनी बेसेंट )

एनी वसन्तेयमुदारभावा[2]
समाज-सेवा-व्रतमादिधित्सुः[3] ।
अध्यात्म-शिक्षा-समितेः[4] प्रधाना
लोकोद्धृतौ स्वं समयं निनाय ॥

( ११३ )

वैदेशिकी चापि स्वतन्त्रतायै
साऽयुद्ध योधेव समाज-निष्ठा ।
स्वायत्ततां स्वीय-प्रशासनं च
साऽघोषयद् देशहिताय मुक्त्यै ॥

( ११४ ) ( श्री रवीन्द्रनाथ ठाकुरः )

रवीन्द्र-वर्यो[5] गरिमाऽनवद्यो
गीताञ्जलेर्गीत-सुगीत-कीर्तिः ।
देशोद्धृतौ काव्य-समुच्चये च
यशः स लेभे निज-गीति-पद्यैः ॥

( ११५ ) ( श्रीमती सरोजिनी नायडूः )

सरोजिनी[6] भारत-कोकिलेति
ख्याता गुणैर्देश-विदेश-मध्ये ।
समाज-दीनोद्धरणे निमग्ना
स्वजीवनं देश-हिताय प्रादात् ॥

---

१. खिलाफत-आन्दोलनम् । २. श्रीमती एनी बेसेन्ट ( १८४६–१९३३ ई० ) । ३. चरितुम् इच्छुका । ४. थियोसोफिकल सोसाइटी इत्येतस्याः । ५. श्री रवीन्द्रनाथ टैगोरः ( १८६१–१९४१ ई० ) । ६. श्रीमती सरोजिनी नायडूः ( १८७९–१९४९ ई० ) ।

( ११६ ) ( श्री राजगोपालाचार्यः )

विज्ञान-वारांनिधिरेष राजो
गोपाल-वर्यो[1] निज-देश-भक्तः ।
स्वातन्त्र्य-सेनापति-कार्य-निष्ठः
सोऽशोभयद् राष्ट्रपतेः पदं च ॥

( ११७ ) ( श्री भीमरावः अम्बेडकरः )

श्री भीमरावो[2] विधि-शास्त्र-विज्ञो
दीनोद्धृतौ न्यस्त-समस्त-शक्तिः ।
स संविधानं निज-भारतीयं
निर्माय लोकेऽक्षर-कीर्तिमाप ॥

( ११८ ) ( खां अब्दुल गफ्फार खां )

खां अब्दुलोऽसौ[3] कृतिनां वरिष्ठो
देशार्पित-श्रीर्निज-देश-भक्तः ।
गांधेर्व्रतं बोधयितुं समन्तात्
सीमान्त-क्षेत्रे श्रमभाग् बभूव ॥

( ११९ )

सीमान्त-गांधीति प्रसिद्धिमाप्तो
रक्तांशुकैः[4] क्रान्ति-निबोधकोऽभूत् ।
सीमान्त-क्षेत्रे यवन-प्रदेशे
स्वातन्त्र्य-युद्धं सफलीचकार ॥

( १२० ) ( श्री गणेशशंकर विद्यार्थी )

विद्यार्थिवर्यो निजदेशभक्तः
प्रान्तोत्तरे क्रान्तिधुरं बभार ।
सुलेखकोऽसौ यवनाऽऽर्य-मैत्रीम्
इच्छन् हतः कीर्तिमवाप शश्वत् ॥

---

१. श्री चक्रवर्ती राजगोपालाचार्यः ( १८७९–१९७६ ई० ) । २. श्री भीमराव अम्बेडकरः ( १८९३–१९५६ ई० ) । ३. श्री खान अब्दुल गफ्फार खां । ४. लाल-कुर्ती-दलेन ।

( १२१ ) (**श्री रफी अहमद किदवई**)

स किद्वई[1] नाम-गुणैरुदारैः
ख्यातिं गतो देश-हितार्थ-जीवी।
निरीक्ष्य हिन्दून् यवनान् समं स
बन्धुत्व-भावोद्भवमेव चक्रे॥

( १२२ ) (**श्री आचार्य जे० बी० कृपलानी**)

आचार्यवर्यः कृपलानि-जे० बी०[2]
शिक्षा-विधि-ज्ञो निज-देश-भक्तः।
कांग्रेस-अध्यक्ष-पदं सुशोभ्य
कीर्त्या युतो गांधि-सृतिं श्रितोऽसौ॥

( १२३ ) (**श्री आचार्य विनोबा भावे**)

आचार्यवर्यस्तु विनोब-भावे[3]
महात्मगांधेः प्रबलस्तु शिष्यः।
देशाय दत्त्वा निज-जीवनं स
सर्वोदये स्वीयमतिं बबन्ध॥

( १२४ )

भूमेः प्रदानं च श्रमस्य दानं
रक्तस्य दानं समयस्य दानम्।
सोऽघोषयद् देश-समृद्धि-हेतोः
सर्वस्य-दानं परमं हि दानम्॥

( १२५ ) (**श्री जयप्रकाश-नारायणः**)

'जयप्रकाशो' विजय-प्रकाशो
'नारायणो' वीरवरः सुधीरः।
'जे० पी०'-ति ख्यातो नय-वर्त्म-विज्ञः
समाजवादे सुरुचिः सहिष्णुः॥

---

१. श्री रफी अहमद किदवई (१८९४-१९५४)। २. आचार्य जे० बी० कृपलानी (ज० १८८८ ई०)। ३. आचार्य विनोबा भावे। ४. श्री जयप्रकाश नारायणः (ज० १९०१ ई०)।

( १२६ )

क्लेशानशेषानसहिष्ट सोऽयम्
आपातकाले नियमं चरिष्णुः ।
आपातकाल-क्षयमेष दृष्ट्वा
अस्थापयद् लोक-समाज-तन्त्रम् ॥

( १२७ )

क्रान्तेर्धुरं वोढुमसौ समर्थः
समग्र-क्रान्ति सततं तनोति ।
सर्वोदयां नीतिमुपास्य चायं
दरिद्र-दीनोद्धरणे समर्थः ॥

( १२८ )

आचार-दीक्षा-व्रत-पालनेन
लोकप्रियो लोक-सुनायकोऽसौ ।[1]
निरुध्य लोके त्वधिनायकत्वं
जयत्यसौ दीन-समाज-बन्धुः ॥

( १२९ )

स्वातन्त्र्य-युद्धं यदिह प्रवृत्तं
क्रान्त्यात्मकं शान्ति-समन्वितं च ।
महात्म-गांधेस्तु सुनायकत्वे
स्वातन्त्र्यमाप्तं सुखदं वरेण्यम् ॥

( १३० )

स्वातन्त्र्य-रक्षा जनता-समृद्धिः
दरिद्र-दीनाऽन्त्यज-रक्षणं च ।
बन्धुत्व-भावोदय-देशभक्तिः
व्याप्नोतु देशे जन-मङ्गलाय ॥



१. 'लोकनायक' इति ख्यातः ।

# १. शान्ति-स्तोत्रम्

( वसन्ततिलका वृत्तम् )

**( दिवंगतायाः श्रीमत्या ओम्शान्तिद्विवेदिन्याः स्मृतौ विरचितम् )**

( १ )

प्रातर्भजे भुवनभास्वरि ! भास्वराङ्गीं
चिन्तासमाकुलमतिः करुणावनम्रः ।
दीनो विनीतहृदयो हृदयावतप्तः
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

( २ )

त्वं ब्रह्ममूर्तिरपरा किमु शक्तिरन्या
किं वा जगद्धितकरी करुणा विशिष्टा ।
किं चित्तवृत्तिरथवा जगतो हिताय
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

( ३ )

त्वं जीवनं त्वमसि मे मतिरेव शान्ता
त्वं प्राणरूपिणि ! सदा गतिरेव हृद्या ।
ज्योत्स्ना हृदो मम मतेः सुखदा सुधैव
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

( ४ )

हे धर्मचारिणि ! सदा सुकृतानुबन्धे !
हे सत्यनिष्ठनिजवृत्ति-कृतात्ममोक्षे !
हे साध्वि ! सत्त्वपरमे ! सुकृतानुयाते !
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

( ५ )

हे मानसैकललिते ! दयिते ! दयार्द्रे !
हे ज्ञानभक्ति-करुणा-सुखशान्तिरूपे !
हे स्नेहसौख्य-सुषमा-गुरुतानिधाने !
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

( ६ )

ज्ञानं त्वमेव मम देवि ! त्वमेव विद्या
त्वं सौख्यराशिरसि देवि ! त्वमेव कान्ता ।
ज्योतिस्त्वमेव मम लोचनयोः सुधैव
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

( ७ )

त्वं मे मतिर्मम गतिर्मम शक्तिरूपा
त्वं मे सुधा मम सदा वसुधा सुधार्द्रा ।
त्वं कान्तिराशिरसि मे मम शान्तिरूपा ।
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

( ८ )

त्वं मोह-शोक-दुरितार्ति-विदारणासि
त्वं दुःख-कष्ट-भय-ताप-निवारणासि ।
त्वं शान्ति-सौख्य-करुणा-वरुणालयासि
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

( ९ )

त्वं चेतसश्चितिरहो भुवनस्य भर्त्री
शक्तिः शिवस्य सुमतिः सुमतेः सुखार्द्रा ।
ज्योतिः रवेः सुखकरी सुषमा सुधांशोः
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

( १० )

अर्थोऽसि शब्दनिवहस्य भवस्य भूतिः
चैतन्यशक्तिरपरा जगतो विधातुः ।
त्वं भूति-भक्ति-मति-शक्ति-विरक्तिरूपा
त्वां देवि ! दिव्यसुमते ! शरणं प्रपद्ये ॥

## २. भारत-वन्दना

( १ )

ज्ञान-विज्ञान-सन्दोहां, क्रान्ति-शान्ति-स्वरूपिणीम् ।
अमरां भारतीं देवीं, वन्दे मातरमन्वहम् ॥

( २ )

षष्टि-कोटि-नरैर्युक्तां, द्विषष्टि-कोटि-हस्तकाम् ।
गुणिभिः श्रमिभिर्जुष्टां, वन्दे मातरमन्वहम् ॥

( ३ )

बङ्ग-पञ्चनदैर्हृद्याम्, असमोत्कल-शोभिनीम् ।
कश्मीर-राजस्थानाढ्यां, वन्दे मातरमन्वहम् ॥

( ४ )

मध्योत्तर-प्रदेशाभ्यां, विहारेण च भास्वतीम् ।
गुर्जरैस्तमिलैः कान्तां, वन्दे मातरमन्वहम् ॥

( ५ )

केरलेनान्ध्रकेणेष्टां, हिमाचल-मनोरमाम् ।
महाराष्ट्रेण संदीप्तां, वन्दे मातरमन्वहम् ॥

( ६ )

कर्णाट-गीत-संगीतां, हरियाणा-विभास्वराम् ।
मेघालयेन संहृष्टां, वन्दे मातरमन्वहम् ॥

( ७ )

त्रिपुरा-मणिपूर्भ्यां च, सिक्खिमेन मनोहराम् ।
नागालैंड-गुणैर्रम्यां, वन्दे मातरमन्वहम् ॥

( ८ )

स्वच्छ-कीर्ति-सुधा-सिक्तां, विद्वन्मौक्तिक-मालिनीम् ।
वीरांगना-यशः-शुभ्रां, वन्दे मातरमन्वहम् ॥

( ९ )

ज्ञान-विज्ञान-संपुष्टैः, राष्ट्रोत्थान-परायणैः ।
क्रान्ति-दूतैः स्तुतां हृद्यां, वन्दे मातरमन्वहम् ॥

( १० )

रोग-शोक-भय-क्रोध-दुःख-दारिद्र्य-नाशिनीम् ।
सर्वज्ञां देवजुष्टां तां, वन्दे मातरमन्वहम् ॥

## ग्रन्थकृतो वंश-परिचयः

चकास्त्युत्तर-प्रदेशस्य, पूर्वस्यां दिशि विश्रुतम् ।
गाजीपुरं[१] जनपदं, जाह्नवी-तोय-पावितम् ॥ १ ॥
गृहंभरो[२] ग्रामवरः, तत्राऽऽस्ते प्राज्ञ-सेवितः ।
धीरैर्वीरैः समायुक्तः, प्रथितः क्षत्रकर्मणि ॥ २ ॥
'छेदीलालः' साधुवरः[३], तत्राऽऽसीन्महितः सताम् ।
दानवीरो गुणैः श्रेष्ठो, वैश्य-वंश-विभाकरः ॥ ३ ॥
तस्य सूनुः सतां मान्यो, 'बलराम'[४]-महोदयः ।
जन्मना पावयन्नासीत्, सत्कुलं साधु-सेवितम् ॥ ४ ॥
त्यागी तपस्वी धर्मार्थी, देशार्थं त्यक्त-जीवनः ।
देश-जात्युन्नतौ लग्नः, सदा निष्काम-कर्मकृत् ॥ ५ ॥
अष्टादशाधिके वर्षे, ऊनविंश-शतोत्तरे ।
दिसम्बरस्य मासस्य, षष्ठे[५] शुभदिने तदा ॥ ६ ॥
'वसुमत्यां'[६] सुतो जातः, तस्य 'कपिल'-नामकः[७] ।
ज्वालापुरं गुरुकुलं[८], योऽगाद् ज्ञानोपलब्धये ॥ ७ ॥
लब्ध्वोपाधिं कुलात्तस्माद्, 'विद्याभास्कर'-संज्ञिताम् ।
प्राच्य-प्रतीच्य-विद्या यो, विविधा ह्यात्मसाद् व्यधात् ॥ ८ ॥
यजुर्वेदं सामवेदं, योऽकरोत् कण्ठहारताम् ।
'द्विवेदि'-नाम्ना विख्यातो, ग्रन्थ-त्रिंशक-लेखकः ॥ ९ ॥
संस्कृतोद्धार-संलग्नो, वेद-विद्या-विशारदः ।
भाषाशास्त्र-रुचि-'र्देवो', दश-भाषा-विचक्षणः ॥ १० ॥
'ओम् शान्ति'[९]-मुपायंस्त, साध्वीं शीलवतीं प्रियाम् ।
सप्त-संतति-संयुक्तो, 'भारती'-भाव-पेशलः ॥ ११ ॥
'भारतेन्दु'श्च 'धर्मेन्दुः', 'ज्ञानेन्दुः' 'प्रतिभा'-भिधा ।
'विश्वेन्दु'श्च गुणैः श्रेष्ठः, 'आर्येन्दु'-र्लभतां शिवम् ॥ १२ ॥



---

१. गाजीपुर-मण्डलम् । २. गहमर-ग्रामः । ३. पितामहः काश्यपगोत्रोत्पन्नः श्री छेदीलाल साहुः । ४. पितृवर्यः श्री बलरामदास साहुः । ५. जन्म-तिथिः—६ दिसम्बर १९१८ ई० ( हाईस्कूल-प्रमाणपत्रानुसारम् १६ दिस० १९१९ ई० ) । ६. माता—श्रीमती वसुमतीदेवी । ७. कपिल-देवः । ८. ज्वालापुरीय-गुरुकुल-महाविद्यालयम् । ९. भार्या—श्रीमती ओम्शान्ति-द्विवेदी ।